गादुक्तम् २० ॥ नियतोत्तरभाविनि ॥ फलति । फलनिष्पत्तौ० त्रि फलाविशरणेवा । पचाद्यच् ॥ फलं द्विविधम् । सातिशयंनिरतिशयञ्च । तत्रसातिशयंस्वर्गादि०निरतिशयं मोक्ष : सचपरमानन्दस्वरूप : ब्रह्मणस्तद्रूपत्वात् ॥ फलंफलेधनेबीजे निष्पत्तौभोगलाभयो : । सस्ये इति केशव: ॥ फलेच्छासाधनंसंक्रामति ।

फलक : । पुं० न० चर्म्मणि । फले । ढाल० इ० भा० ॥ फलति । त्रि-फला० । क्षुद्रादिभ्योवुन् । पुं० दारुघटितदीर्घासने । फला०पट्टा० पटड़ा० इ० भा० ॥ काष्ठादिपट्टके ॥ यथा । पाण्डुलिखितफलकेभूमौ वाप्रथमंलिखेत् । ऊनाधिकन्तुसं शोध्यपश्चात्पत्रे निवेशयेत् ॥ इति ॥ अस्थिखण्डे ॥ नागकेसरे ॥ रजकस्यपट्टे ॥ शाल्मलिफलकेश्लक्ष्णेनि-ज्यादासांसिनेजक : । नचवासांसि वासोभिर्निर्हरेन्नचवासयेत् ॥

फलकपाणि : । त्रि० चर्मिणि । फलकधारिणि । ढलैत० इ० भा० ॥ फलकंपाणौयस्य ॥

फलकी । पुं० फलु इ० गौ० प्र० मत्स्ये ॥ त्रि० फलकान्विते ॥

फलकीतीर्थम् । न० तीर्थविशेषे ॥

फलकृष्ण : । पुं० पानीयामलके ॥

फलकेशर : । पुं० नारिकेलवृक्षे ॥

फलकोषक : । पुं० अण्डकोषे ॥

फलग्राही । पुं० वृक्षे । त्रि० फलग्रहणकर्त्तरि ॥

फलचमस: पुं० दधिमिश्रितवटत्वक् चूर्णे ।

फलचोरक : । पुं० चोरकनामगन्धद्रव्ये ॥

फलत्रयम् । न० द्राक्षापरूषकाश्मरीषु ॥ त्रिफलायाम् ॥ फलानांत्रये ॥

फलत्रिकम् । न० त्रिफलायाम् ॥ हरीतक्यादित्रये ॥ फलानांत्रिकम् ॥

फलद : । पुं० ईश्वरे ॥ वृक्षे ॥ त्रि० फलदातरि ।

फलपञ्चाम्लम् । न० अम्लपञ्चफले ॥

फलपाक : । पुं० पानीयामलके ॥ करमर्द्दके ॥

फलपाकान्ता । स्त्री० धान्यकदल्यादोषधौ ॥ फलपाकइवान्तोयस्या: ॥

फलपाकी । पुं० गर्दभाण्डे ॥

फलपुच्छ : । पुं० वरंडालौ ॥

फलपुष्पा । स्त्री० पिण्डखर्ज्जूर्य्याम् ॥ द्रोणपुष्प्याम् । गुम्मा० इ० भा० ॥

फलपूर : । पुं० बीजपूरे । बिजौरा० इ० भा० । फलेनपूर्य्यते । पूरी० । इगुपधेतिक : ॥ कर्म्मणिवञ्त्वा ॥

फलपूरक : । पुं० कोलङ्के । बीजपूरे ॥

फलप्रद : । पुं० ईश्वरे ॥ धनेदानेन नष्टेपितत्फलप्रदईश्वर : । यतोस्तितेनदातारंतंप्रशंसन्तिवैदिका :

॥ नापूर्वं फलदं तस्मिन्मानाभावात्फलं पुन: । ईशादप्युपपन्नत्वान्नैवापूर्वस्य कल्पकम् । सेव्यादातु: फलप्राप्तिर्दृश्यतेनत्वपूर्व्वत: । दानादिक्रियया सेव्यादीशात्तद्वत्फलं भवेत् ॥

फलप्रिया । स्त्री० प्रियङ्गौ ॥

फलभूमि: । स्त्री० कर्मफलभोगस्थाने ॥ यथा । भरतान्यैरावतानि विदेहाश्च कुरून्विता: । वर्षाणि कर्म्मभूम्य: स्यु: शेषाणि फलभूमय इति हेमचन्द्र: ॥

फलमुख्या । स्त्री० पिण्डखर्जूरे ॥ अजमोदायाम् ।

फलमुद्गरिका । स्त्री० पिण्डखर्जूरे ॥

फललक्षणा । स्त्री० प्रयोजनवत्यां लक्षणायाम् ॥ यथा व्यङ्ग्यस्य गूढागूढत्वाद्द्विधास्यु: फललक्षणा: इति साहित्यदर्पण: ॥

फलवान् । त्रि० फलिनि । फलसहित वृक्षे ॥ फलिनं ॥ फलवत् सन्निधावफलं तदङ्गम् ॥ फलान्यस्यसन्ति । मतुप् ॥

फल र्तुलम् । न० कालिङ्गे ॥

फलविषय: । त्रि० फलव्याप्ये ॥ अनात्मनि ॥

फलवृत्तक: । पुं० पनसे ॥

फलव्याप्यत्वम् । न० वाह्येन्द्रियसन्निकृष्टार्थाकारवाह्यधीपरिणामावच्छिन्नचिदंशकृत० प्राकट्याश्रयत्वं ॥ फलवृत्तिप्रतिबिम्बितचिदाभासस्य व्याप्यत्वमित्यर्थ: ॥

फलशाकम् । न० षड्विधशाकान्तर्गतफलरूपशाके ॥

फलश्रेष्ठ: । पुं० आम्रे ॥ फलेषु श्रेष्ठ: ॥ तद्वृक्षे ॥

फलषाडव: । पुं० दाडिमे ॥

फलशैशिर: । पुं० वदरवृक्षे ॥

फलश्रुति: । स्त्री० कर्म्मप्रवृत्तिनिमित्तप्रलोभजनकवाक्ये ; कर्मफलश्रवणे । यथा । फलश्रुतिरियंनॄणां श्रेयोरोचनंपरम् । श्रेयोविवक्षया प्रोक्तं यथाभैषज्यरोचनम् ॥ अपि च । वेदोक्तमेवकुर्वाणोनि: सङ्गोर्पित मीश्वरे । नैष्कर्म्यां लभतेसिद्धिंरोचनार्था फलश्रुति: ॥

फलस्नेह: । पुं० अक्षोटवृक्षे ॥

फलहारी । स्त्री० काल्याम् ॥

फला । स्त्री ० भिञ्भिरिष्टाक्षुपे ॥

फलाढ्या । स्त्री० काष्ठकदल्याम् ॥

फलाध्यक्ष: । पुं० राजादने । क्षीरिकायाम् । खिरणी० इ० भा० ॥ फलानामध्यक्ष: ॥

फलादन: । पुं० शुके । कीरे । सूआ० इ० प्र०पक्षिणि । त्रि०फणं फलानिवाअदनंयस्य तस्मिन् ॥

फलान्त: । पुं० वंशे ॥ फलेनफलैर्वा अन्तोयस्य ॥

फलाम्ल:। पुं० अम्लवेतसे ॥ न० वृक्षाम्ले ॥

फलाशन:। पुं० शुकपक्षिणि ॥ त्रि० फलभक्षके ॥

फलासव:। पुं० फलरसविकृतीसुराप्रभेदे ॥

फलि:। पुं० फलुइ इ० प्र० मत्स्ये ॥

फलिका। स्त्री० निष्पाव्याम् ॥

फलित:। पुं० वृक्षे ॥ न० शैलेये। शिलापुष्पे ॥ त्रि० सफले। सञ्जातफले ॥ फलानिसञ्जातान्यस्य। तारकादित्वादितच् ॥

फलितार्थ:। त्रि० निष्कृष्टार्थे ॥ फलितश्चासावर्थश्च ॥

फली। त्रि० फलवति ॥ फलान्यस्यसन्ति। अतइनि: ॥

फलिन:। त्रि० फलवति ॥ विद्यमानफले। फलान्यस्यसन्ति। फलबर्हाभ्यामिनच् ॥ पुं० पनसे फलवतिवृक्षेच ॥ इतिराजनिर्घण्ट: ॥

फलिनी। स्त्री० प्रियङ्गुवृक्षे। अग्निशिखावृक्षे ॥ नाम्नलक्षणोङीप् ॥

फली। स्त्री० प्रियङ्गुवृक्षे ॥ गौरादित्वान्ङीष् फलिनस्थे ॥

फलीकरणम्। न० तुषे ॥

फलीश:। पुं० पारिशे ॥

फलूष:। पुं० लताप्रभेदे ॥

फलेग्रहि:। पुं० यथाकालफलधरे। अवन्ध्यवृक्षे ॥ त्रि०फलग्रहणकर्त्तरि ॥ फलानिगृह्णाति। ग्रह०। फलेग्रहिरात्मम्भरिश्चेति उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्चनिपात्यते ॥

फलेन्द्र:। पुं० राजजम्ब्वाम्। फरेंदा० इ०भा० ॥

फलेपुष्पा। स्त्री० द्रोणपुष्प्याम् ॥

फलेप्सु:। त्रि० सकामेजने ॥ फलंप्राप्तुमिच्छतीतितथा ॥

फलेरुहा। स्त्री० पाटलायाम्। पाटलिवृक्षे ॥ फलेरोहति। इगुपधेतिरुहे: क:। तत्पुरुषेकृतीत्यलुक् ॥

फलोत्तमा। स्त्री० काकलीद्राक्षायाम। निर्बीजायाम्। किस्मिस०इ० भा० ॥

फलोत्पत्ति:। पुं० आम्रवृक्षे ॥

फलोदय:। पुं० लाभे ॥ त्रिदिवेशालये ॥ फलस्यउदय: अस्मिन्वा ॥

फल्गु:। पुं० विसारिताङ्गे ॥

फल्गु:। स्त्री० गयास्थनद्याम् मलव्याम्। काकोदुम्बरिकावृक्षे ॥ गुलाल०फाग०इ०प्र०रंगप्रभेदे ॥ मिथ्यावाक्ये ॥ त्रि०तुच्छे। असारे ॥ यथा। जगमाजगतिजगजगदेतद्तिफल्गु। धनलोभमपहायनमप्रभनयनाय ॥ फलतिञिफलाविशरणे०फलनिष्पत्तौवा। फलिपाटीतिसाधु: ॥

फलगुतीर्थम् । न० गयानद्याम् ॥ सार्द्धक्रोशद्वयमानं गयायांपरिकीर्त्तितम् । पंचक्रोशंगयाक्षेत्रं क्रोशमेकंगयाशिर : ॥ तत्रपिण्डप्रदानेन तृप्तिर्भवतिशाश्वती ॥ नागाज्जनार्दनाच्चैवकूपाच्चोत्तरमानसात् ॥ एतद्गयाशिर : प्रोक्तं फल्गुतीर्थंतदुच्यते । तत्रपिण्डप्रदानेनपितॄणांपरमागति : ॥ पृथिव्यांयानितीर्थानियेसमुद्रा : सरांसिच। फल्गुतीर्थंगमिष्यंतिवारमेकंदिनेदिने ॥

फल्गुदा । स्त्री० गयानद्याम् ॥

फल्गुन : । पुं० अर्जुनपाण्डवे ॥ अर्जुनपादपे ॥ फलतिनिष्पादयति फल० फलेर्गुक्चेत्युनन् ०गुगागमश्च ॥ त्रि० फल्गुन्यांजाते ॥ श्रविष्ठाफल्गुनीत्यणोलुक् । लुक्तद्धितलुकि ॥

फल्गुनी । स्त्री० नक्षत्रविशेषे । पूर्वफल्गुन्यो : ॥ काकोदुम्बरिकायाम् ॥ फल्गुन्यांजातायाम् ॥ श्रविष्ठाफल्गुनीत्यणोलुकि०लुकतद्धितलुकीतिस्त्रीप्रत्ययस्यचलुकि० फल्गुन्यषाढामितिट : ॥ टित्वान् ङीप् ॥

फल्गुवाटिका । स्त्री० काकोदुम्बरिकायाम् ॥

फल्गुवृन्तक : । पुं० श्योनाकप्रभेदे ॥

फल्गूत्सव : । पुं० दोलयात्रायाम् ॥

फल्यम् । न० कुसुमे ॥

फल्यकी । स्त्री० फलिमत्स्ये ॥

फलफल : । पुं० सूर्पजवाते ॥

फा: । पुं० वृद्धौ ॥ वर्द्धके ॥ सन्तापे ॥ निष्फलभाषणे ॥

फाटकी । स्त्री०स्फटिकायाम् । फटकिरी इ० भा० ॥

फाणि: । स्त्री० गुडे ॥ करंभे ॥

फाणितम् । न० मत्स्यण्डाम् । राव० इ० भा० यथा । इक्षोरसस्तुय : पक्व : किञ्चिद्गाढोबहुद्रव : । सएवेक्षुविकारेषुख्यात : फाणितसंज्ञया ॥ फाणितंगुर्वभिष्यन्दितं'हणं कफशुक्रकृत् । वातपित्तश्रमान्हन्ति मूत्रवस्तिविशोधनम् ॥ फण्यते । फाणगतौ । ख्यन्त:क्त : ।

फाण्ट : । त्रि० अनायासकृते ॥ पुं० न० कषायविशेषे ॥ क्षुण्णमौषधजातमुष्णोदकेप्रक्षिप्य सद्योभिषुत्यपूत्वायत्पीयतेतत्फाण्टमित्याहु : ॥ यथा । क्षिप्त्वोष्णतोयेमृदित : फाण्टइत्यभिधीयते ॥ अपिच । क्षुण्णद्रव्यपलेसम्यकजलमुष्णं विनि:क्षिपेत् पात्रेचतुष्पलंमितेततस्त्स्रावयेज्जलम् ॥ सोयंचूर्णद्रव : फाण्टोभिषग्भिरभिधीयते ॥ इति वै० प० ॥ फण्यतेस्म । फण० । क्त : । क्षुब्धस्वान्तेतिसाधु : ॥ नवनीतभावात्प्रागवस्थापन्ने द्रव्ये ॥

फालः । पुं॰ महादेवे ॥ बलदेवे ॥ उत्प्लुतौ ॥ पुं॰ न॰ कृषिके । सीरोपकरणे ॥ नवविधदिव्यान्तर्गताष्टमदिव्ये ॥ यथा । आयसंद्वादशपलवटितंफालमुच्यते । अष्टाङ्गुलंभवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥ अग्निवर्णंततस्चौरोजिह्वयालेहयेत्सकृत् । नदग्धश्चेच्छुद्धिमियादन्यथातुसहीयते ॥ चौरोऽत्रगोचौरः । गोचौरस्यप्रदातव्यं तप्तफालावलेहनमितिस्मृतिः ॥ त्रि॰ कार्पासवाससि ॥ फालयति । त्रिफला॰ । ण्यन्तात् पचाद्यच् । फलस्यविकारः । तस्यविकारइत्यण् ॥

फालवहः । पुं॰ हले ॥

फाल्गुनः । पुं॰ गुडाकेशे । पार्थे । अर्जुने ॥ नदीजवृक्षे ॥ अर्जुनभूरुहे ॥ तपस्ये॰ मासि । फागन॰ इ॰ भा॰ ॥ तत्रजातस्यफलम् । प्रियंवदः सज्जनवल्लभस्यपरोपकारीविमलाशयश्च । दातानितान्तंप्रमदाभिलाषीस्यात्फाल्गुनेयस्यजनस्यजन्म । अनन्तपुरे ॥ फलतिनिष्पादयति । फल॰ । फलेर्गुक्चेतिउनन्॰ गुगागमश्च । ततः प्रज्ञाद्यण् ॥ यद्वा । फाल्गुनीपौर्णिमास्यस्मिन् विभाषाफाल्गुनीतिपक्षे॰ अण् ॥

फाल्गुनानुजः । पुं॰ सुरभौ । वसन्तकाले ॥ अर्जुनस्यकनिष्ठभ्रातरि ॥

फाल्गुनिकः । पुं॰ तपस्यमासे । फाल्गुने ॥ फाल्गुनीपौर्णमास्यस्मिन् । विभाषाफाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः इतिठक् । ठस्येकः ॥

फाल्गुनी । स्त्री॰ तपस्यपूर्णिमायाम् । अत्रगौड़देशीयादोलायात्रांकुर्वन्ति । नरोदोलागतंदृष्ट्वागोविन्दंपुरुषोत्तमम् । फाल्गुन्यांसंयतोभूत्वा गोविन्दस्यपुरंव्रजेत् ॥ अपिच । फाल्गुन्यांक्रीडनंकुर्याद्दोलायांममभूपते इति ॥ पूर्वफल्गुन्याम् ॥ उत्तरफल्गुन्याम् ॥ फल्गुनीभिर्युक्तापौर्णमासी ॥ नक्षत्रेणयुक्तः । ततोङीप् ॥

फिः । पुं॰ पापे । निष्फलवाक्ये ॥ कोपे ॥

फिङ्गकः । पुं॰ कलिङ्गे । भृङ्गे । भूम्याटविहगे । फिङ्गा॰ इ॰गौ॰ भा॰ प्र॰ खगे ॥

फिरङ्गः । पुं॰ रोगान्तरे ॥ द्वीपान्तरे कद्वीपविशेषे ॥ तत्रत्यजने ॥ यथा । पूर्वाम्नायेनवशतंषडशीतिः प्रकीर्तिताः । फिरङ्गभाषयामन्त्रास्तेषांसंसाधनात्कलौ ॥ अधिपामण्डलानाञ्चसङ्ग्रामेष्वपराजिताः । इङ्गरेजानवषट् पञ्चलण्डुजाश्चापि भाविनः । इतिमेरुतन्त्रे २३ प्रकाशः ॥

फुः । पुं॰ मन्त्रके ॥ तुच्छवाक्ये ॥

फुक्क: । पुं॰ पक्षिणि ॥

फुट: । वि॰ सर्पफणायाम् ॥

फुत् । अ॰ अनुकरणशब्दे ॥

फुत्कर: । पुं॰ अग्नौ ॥

फुत्कार: पुं॰ फुत्करणे । फूंक॰ इ॰ भा॰ ॥

फुत्कृति: । स्त्री॰ फूत्कारे ॥

फुप्फुस: । पुं॰ पुप्फुसे । कोष्ठविशेषे ॥ सचहृदयनाडिकासंलग्नाशयविशेष: । फोंपडा॰ भस्॰ इ॰ भा॰ ॥ यथा । स्थानान्यामाग्निपक्वानांमूत्रस्यरुधिरस्यच । हृदुण्डक: फुप्फुसश्चकोष्ठइत्यभिधीयते ॥ अस्यार्थ: । आमस्यस्थानमामाशयोनाभिरूर्द्ध्वम् । अग्ने: स्थानंपच्यमानाशयोनाभिमध्यम् । पक्वस्यस्थानं पक्वाशयोनाभेरध: । मूत्रस्यस्थानं वस्ति: । रुधिरस्यस्थानंयकृत्प्लीहानौ । हृत्हृदयं । इक्षुरसपाकमलवद्य: शोणितमलस्तज्ज: उण्डुक: सचान्त्रदेशेव्यवस्थित: पुरीषाधानम् । फुप्फुस: हृदयस्यवामपार्श्वे फुप्फुण्ड इतिस्यातइतिविजयरचित: ॥

फुल्ति: । स्त्री॰ फलने ॥

फुल्ल: । त्रि॰ विकसिते ॥ पुष्पे ॥ यथा । श्रीपद्मन्यांश्रियंदेवीफुल्लै: सम्पूजयेत्सदा ॥ फलति । ञिफला । शीत: क्त: । आदितश्चे तीडभाव: । तिचेत्युत्वम् । अनुपसर्गात् फुल्लचीवेति॰ तस्यल: ॥

फुल्लदाम । न॰ छन्दोभेदे ॥ यथा । मोगौनौतौगौ॰ शरहयतुरगै: फुल्लदामप्रसिद्धम् ॥ यथोदाहरणम् । शश्वल्लोकानांप्रकटितकदमसंध्वस्तमालोक्यकंसंद्दृष्यद्भिस्तैभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम् । मुग्धामोदैनस्थगितदशदिशाभोगमाहूतभृङ्गंमौलौदैत्यारेर्न्यपतदनुपमंस्वस्तरो: फुल्लदाम ॥ पुष्पमालायाम् ॥

फुल्लदृक् । त्रि॰ विकसितनयने ॥

फुल्लफाल: । पुं॰ शूर्पवाते ॥ इ॰ त्रिशेष: ॥

फुल्ललोचन: । त्रि॰ विकसितनेत्रवति ॥

फुल्लीक: । पुं॰ देशे ॥ सर्पे ॥

फूत्कार: । पुं॰ श्वासनिर्गमे । श्वसिते ॥ फूत्कारणम् । कृञ्॰ । घञ् ॥

फेत्कारिणी । स्त्री॰ तन्त्रविशेषे ॥

फेन: । पुं॰ डिण्डीरे । अब्धिकफे । समुद्रफेने ॥ तरलद्रव्योपर्युत्थितबुद्बुदाकारवस्तुनि । फाग॰ इ॰ भा॰ ॥ स्फायते । स्फायी॰ फेनमीनाविति निपातनात्साधु: ॥

फेनक: । पुं॰ फेने ॥ पिष्टविशेषे ॥

फेनका । स्त्री॰ जलपक्वतण्डुलचूर्णे ॥

फेनदुग्धा । स्त्री॰ दुग्धफेनीक्षुपे ॥

फेनल: । त्रि॰ फेनवति । फेनिले ॥

फेनोऽस्मिन्नस्ति । फेनादिल-
च्चेतिचकारात्लच् ।
फेनवान् । त्रि० फेनले । फेनोऽस्मि
न्नस्ति । फेनादिलच्चेत्यत्रान्यतर
स्यामित्यनुवृत्तेः पक्षेमतुप् ॥
फेना । स्त्री० क्षुपविशेषे । सातलाया
म् ॥
फेनाग्रम् । न० बुद्बुदे ॥
फेनायमानः । त्रि० फेनमुद्वमति ॥
फेनाच्चेतिवक्तव्यमितिक्यङ् ॥
फेनवाही । पुं० वस्त्रे ॥
फेनाशनिः । पुं० इन्द्रे ॥
फेनिका । स्त्री० पक्वान्नविशेषे । फेनी
इ० भा० ॥ यथा समितायाघृता
ढ्यायावर्त्तीर्दीर्घाः समाचरेत् । ता
स्तुसन्निहितादीर्घाःपीठस्योपरिधार
येत् ॥ वेल्लयेद्वेल्लनेनैतायथैकापर्प
टीभवेत् । ततश्छुरिकयातान्तुसंल
ग्नामेवकर्तयेत् ॥ ततस्तुवेल्लयेद्भूयः
शट्टकेनचलेपयेत् ततः संवृततां
लोप्त्रींविदधीतपृथक्पृथक् ॥ पुन
स्तांवेल्लयेल्लोप्त्रींयथास्यान्मण्डलाकृ
तिः । ततस्तांसुपचेदाज्ये भवेयुश्च
पुटाः स्फुटाः ॥ सुगन्धयाशर्करया
तदुद्धूलनमाचरेत् । सिद्धेषाफेनि
कानाम्नीमठकीनसमागुणैः ॥ ततः
किञ्चिल्लघुरियम्विशेषोयमुदाहृतः ॥
फेनिलः । अरिष्टभूरुहे । रीठा० इ०
भा० ॥ वदरवृक्षे ॥ न० मदनफले
॥ बदरफले ॥ त्रि० सफेने ॥ फे
नोऽस्त्यस्ति । फेनादिलच्चेतिइ
लच् ॥
फेरः । पुं० शृगाले ॥
फेरण्डः । पुं० शृगाले ॥
फेरवः । पुं० शृगाले । असुरे । रा-
क्षसे ॥ फे० इति० अव्यक्तोरवोऽस्य
॥ त्रि० धूर्त्ते ॥ हिंस्रे ॥
फेरुः । पुं० जम्बुके । शृगाले । फे०
इत्यव्यक्तंरौति रुशब्दे । मितद्वा
दित्वात् डुः ॥
फेलम् । न० भुक्तसमुज्झि
फेलकः पुं० ते । उच्छि
ष्टे ॥
फेला । स्त्री० भुक्तोज्झिते ॥ फेल्यते ।
फेलृगतौ । गुरोश्चहलः ॥
फेलिः । भुक्तोज्झिते ।
फेलिका । स्त्री० उच्छिष्टे । अ
फेली । ट० । इ० भा०

—:०(—)०:—

बवयोरैक्यमभेददर्शनात् ॥
बः । पुं० पवर्गस्यतृतीयाक्षरे ॥ वरु
णे ॥ सिन्धौ ॥ भगे ॥ तोये ॥
वपने ॥
बंहिमा । पुं० बहुलतायाम् ॥ बहुल
स्यभावः । पृथ्वादित्वादिमनिच् ।
प्रियस्थिरेतिबहुलस्यबंहिआदेशः
बंहिष्ठः । त्रि० अत्यन्तबहुले ॥ अयमे
षामतिशयेनबहुलः । अतिशायने

तमविष्ठनाविनीष्ठन् । प्रियस्थिरेति वंहिष्ठादेश : ॥

वंहीयान् त्रि॰ बहुलतरे ॥ अयम नयोरतिशयेनबहुल : । द्विवचन विभज्योपपदेतरबीयसुनाविनीयसु निप्रियस्थिरेतिवंह्यादेश : ॥

बक : पुं॰ कङ्के । बगला॰ इ॰ प्र॰ पचिणि ॥ अस्यमांसगुणस्तु : शरा रिबककाकाश्च दात्यूहा : पवना-पहा : ॥ इ॰ ॥ बकपुष्पे । शिव मल्ल्याम् । अगस्तिद्रुमे । यथा । सितपीतनीललोहितकुसुमभेदाच्च तुर्विधोऽगस्ति : । मधुरशिशिरदो षशमकासविनाशनश्चभूतघ्न : । तथाचराजनिर्घण्ट : । अगस्तिशि-शिरंगौल्यं त्रिदोषघ्नंश्रमापहम् । बलासकासवैवर्ण्यभूतघ्नश्चबलावह मिति ॥ श्रीदे । कुवेरे ॥ रक्षोविशे षे । योभीमेनहत: ॥ असुरविशेषे ॥ सचश्रीकृष्णेनहत : ॥ वङ्कते । व-क्रिकौटिल्येगतौच । अच् । आग मशास्त्रस्यानित्यत्वान्ननुम् । बवयो रैक्यम् ॥ यद्वा वाति, वायतिवा । वागतिगन्धनयो: । ओवैशोषणे वा कन् । आतोलोप : ॥ वेति॰ वा-यतिवा । मूलविभुजादित्वात्क: वकितिवा । बचेरच् । न्यङ्क्वादि : ॥

बकचिञ्चिका । स्त्री॰ मत्स्यविशेषे॰ । बकाच्याम् ॥

बकजित् । पुं॰ भीमसेने ॥ श्रीकृष्णे ॥

बकनिसूदन : । पुं॰ श्रीकृष्णे । भीमसेने ॥

बकपुष्प : । पुं॰ वकवृक्षे ॥ न॰ अग स्तिकुसुमे ॥

बकवृत्ति : । पुं॰ बकसमानवृत्तनवि शिष्टे यथा । पाषण्डिनोविकर्म-स्थान्वैडालव्रतिकान्शठान् । हैतु कान्बकवृत्तींश्चवाङ्मात्रेणापिना-र्चयेत् ॥

बकवरी । पुं॰ श्रीकृष्णे ॥ भीमसेने ॥

बकव्रतचर : । पुं॰ बकव्रतिनि ॥ बक व्रतंचरतीति॰ तथा । चरेष्ट : । बकोहिप्रायेणमीनहननरुचितयामि थ्याविनीत : सन्नवंशीलोभवतीति गौणोबकव्रतशब्द : तल्लचणन्तु । अधोदृष्टिर्नैकृतिक : स्वार्थसाधनत त्पर : । शठोमिथ्याविनीतश्चबकव्र तचरोद्विज : ॥ इ॰ ॥

बकव्रती । पुं॰ बकव्रतचरे । बकव्रत वति ॥

बकाची । स्त्री॰ बकचिञ्चिकायाम् ॥

बकारि : । पुं॰ श्रीकृष्णे ।

बकुल : । पुं॰ शीधुगन्धे । सिंहकेशरे । मौलसरीति॰ प्र॰ वृक्षे ॥ बङ्कते वक्रिगत्यर्थे । वा॰ उलच् । आगम शास्त्रस्यानित्यत्वान्ननुम् । बकुलस्तु वरोऽनुष्ण : कटुपाकरसोगुरु : । कफपित्तविषश्वित्रक्रिमिदन्तगदाप-

ह : ॥ पश्यवम् ।
वकुला । स्त्री० कटुकायाम् ॥
वकुली । स्त्री० काकोल्याम् ॥
बकुल : । पुं० बकुले ॥
वकेरुका । स्त्री० बलाकाभिदि ॥ वा तावञ्जितशाखायाम् ॥
वकोट : । पुं० शुक्लवायसे । वके ॥
वठर : । पुं० अम्बष्ठे शठे ॥
वणिग्बन्धु : । पुं० नीलीवृक्षे ॥
वणिग्भाव : । पुं० सत्यानृते । वाणिज्ये ॥ वणिजोभाव : । ष्यञ् ॥
वणिग्वह : । पुं० उष्ट्रे ॥
वणिक् ०ग् । पुं० वाणिजके । वाणिज्यकर्त्तरि । क्रयविक्रयकर्त्तरि । वैदेहके सार्थवाहे । नैगमे । क्रयविक्रयके । वाणिज्ये ॥ करणान्तरे ॥ पणते । पण० । पणेरिज्यादेश्चव: ॥ वैश्ये ॥
वणिक् । स्त्री० वणिज्यायाम् ॥
वणिज : । पुं० ववाद्येकादशकरणान्तर्गतषष्ठकरणे । तज्जातफलंयथा । प्राज्ञ : कृतज्ञोगुणवान्गुणज्ञोवणिग्जनप्राप्तमनोरथ : स्यात् । यस्यप्रसूतौवणिजाभिधानंभाण्डप्रधानंद्रविणंहितस्येति ॥ वणिजि ॥
वणिज्यम् । न० वाणिज्ये । ग्रन्थान्तरे ॥ वणिजांकर्मभावोवा । दूतवणिग्भ्याञ्चेति० य : इतिकाशिका । भाष्ये तु० दूतवणिग्भ्याञ्चेतिनास्त्येव ॥
वणिज्या । स्त्री० वाणिज्ये ॥ ग्रन्थान्तरे वणिजांभाव: । दूतवणिग्भ्याञ्चेति य : वणिज्याशब्द : स्वभावात्स्त्रीलिङ्ग : ० भावएवाचप्रत्ययोनतुकर्मणीतिमाधव: । भाष्ये तुवार्त्तिकमेवनास्ति ॥ वणिक्कर्मणि ॥
वण्ठ : । पुं० असहायगमने ॥ अकृतोद्वाहे ॥ खर्वे ॥ कुन्तायुधे ॥ भृत्ये । वांठ० इ० भा० ॥ वण्ठते । वठि । अच् ॥
वण्ड : । त्रि० विकृतलाङ्गूले ॥ बाँडा इ० भा० ॥
वदर : । पुं० कोलिपादपे ॥ वदरस्य पत्रलेपोज्वरदाहविनाशन : । त्वचा विस्फोटशमनीवीजंनेत्रामयापहम् ॥ वदतिस्थिरीभवति० छिन्नस्यापिपुन : प्ररोहणात् । वदस्थैर्ये । वा० अर : ॥ देवसर्षपेहंसे ॥ कार्पासस्यास्थ्नि । विनौला० कपासिया० वाडवा० इ०भा० ॥ न० कोलिफले ॥ कार्पासीफले ॥ वदर्या : फलम् । फलेलुगितिविकारावयवप्रत्ययस्यलुक् ॥ लुक्तद्धितलुकीति० स्त्रीप्रत्ययस्यलुक् ॥ सेविफले ॥ क्षुद्रवदरे । झाडीवेर इ० झडवेरी० इ० भा० ॥ गोपगोण्टायाम् ॥ वदरमात्रे । कर्कन्धौ । वदर्याम् ॥
वदरफली । स्त्री० भूवदर्याम् ॥

बदरवल्ली । स्त्री० ) भूबदर्याम् ॥

बदरा । स्त्री० गृष्टौ । वराहकान्तायामोषधौ ॥ कार्पास्याम् ॥ एलापर्ण्याम् ॥ विष्णुक्रान्तायाम् । टाप् ॥

बदरामलकम् । न० प्राचीनामलके ॥

बदरि : । स्त्री० कोलिवृक्षे ।

बदरिकम् । न० तीर्थविशेषे ॥

बदरिकाश्रम : । पुं० न०तीर्थविशेषे । नारायणाश्रमे । व्यासाश्रमे ॥

बदरी । स्त्री० कोलवृक्षे । कपिकच्छ्वाम् ॥ कार्पास्याम् ॥ गौरादित्वान्ङीष् ॥ बदरीफले ॥ बदर्या : फलम् हरीतक्यादिभ्यश्चेति०विकारार्थस्य लुप् ॥

बदरीखण्ड : । पुं० बदरीणांसमूहे ॥ वृक्षादिभ्य : खण्ड : ॥

बदरीच्छदा स्त्री० शङ्खनख्याम् ॥ हस्तिकोलिवृक्षे ॥

बदरीपत्रकम् । न० नखीनामगन्धद्रव्ये ॥

बदरीपाचनम् । न० तीर्थविशेषे ॥ तत्रवशिष्ठाश्रम : ॥

बदरीफला । स्त्री० नीलशेफालिकायाम् ॥

बदरीशैल : । पुं० अलकनन्दाया : पश्चिमतीरेहिमाचलैकदेशे ॥

बदरीषण्ड : । पुं० बदरीखण्डे ॥ बदरीणांषण्ड : समूह : ॥

बदर्याश्रम : । पुं० नारायणाश्रमे ॥

बद्ध : । त्रि० कीलिते । संयते । कारागारादौनिगडिते ॥ बध्यते स्म । वधबन्धने । क्त : ॥ मोहाद्यावृते० सुखदु:खादिधर्मवति० पाशाष्टकेनयंत्रितेसंसारिजीवेपशौ॥

बद्धगुदम् । न० उदरामयविशेषे । तन्निदानंयथा । यस्यान्त्रमन्नैरुपलेपिभिर्वालाश्मभिर्वापिहितंयथावत् । सञ्चीयते तस्यमल : सदोषात्शनै: शनै : शङ्करवच्चनाडाम् ॥ निरुध्यतेतस्यगुदेपुरीषंनिरेतिकृच्छ्रादपिचाल्पमल्पम् । हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरंबद्धगुदंवदन्ति ॥

बद्धफल : । पुं० करञ्जवृक्षे ॥

बद्धमुष्टि : । त्रि० कृपणे ॥

बद्धमूल : । त्रि० दृढमूले । उत्पाटनानर्हमूले । बद्धोमूलोयस्य स : ॥

बद्धमौन : । त्रि० नि : शब्दे ॥

बद्धरसाल : । पुं० त्रिविधराजाम्रान्तर्गताम्रविशेषे । मध्वाम्रे । मन्मथानन्दे ॥

बद्धशिख : त्रि० शिशौ । बाले ॥ संयतचूडेनरे ॥ यथा । सदोपवीतिनाभाव्यं सदाबद्धशिखेनतु । विशिखोव्युपवीतश्चयत्करोतिनतत्कृतमिति ॥ बद्धाशिखायस्य ॥

बद्धशिखा । स्त्री॰ उच्चटौषधौ ॥

बध: । पुं॰ प्राणवियोगफलकव्यापारे । प्रमापणे । मारणे ॥ हननम् । हन॰ । हनश्चवधश्चल्यप् ॥ पुण्यप्रद वधस्तुयथा, एकस्मिन्यत्रनिधनेप्राप्ते दुष्टकारिणाम् । बहूनांभवति क्षेमं तस्यपुण्यप्रदोवध: ॥ स्कन्दे यीसुरापश्चब्रह्महागुरुतल्पग: । आत्मानं घातयेद्यस्तुतस्यपुण्यप्रदो वध: ॥ इति ॥ अपिच, नैकस्यार्थे बहून्हन्यादितिशास्त्रे षुनिश्चय: एकं हन्याद्बहूनां हिनपापोत्र न जायते ॥ इति वामनपुराणे ५५ अध्याय: । पारिभाषिकवधस्तु । वपनं द्रविणादानं स्थानान्निर्यापणं तथा । एषहिब्रह्मबन्धूनांवधोनान्यो स्तिदैहिक: ॥ इ॰ ॥ करचरणादिच्छेदनादिरूपे ताडने ॥ सप्तम तारायाम् ॥

वधक । पुं॰ व्याधे । मृत्यौ ॥ वध कर्त्तरि । बद्धक॰ इ॰ भा॰ ॥ त्रि॰ हिंस्रे ॥ हन्ति । हन॰ । ण्वुल् । बहुलं तणीतिण्वुलिवधा देश: ॥ वधहिंसायांवा । तदा॰ जनिवध्योश्चेतिवृद्धिनिषेध: ॥

बधत्रम् । न॰ आयुधे ॥ वध्यतेऽनेन । वध॰ । अमिनक्षियजिवधिपति भ्योऽत्रन् ॥

बधस्थली । स्त्री॰ बधस्थाने ॥

बधस्थानम् । न॰ आघातने । सूनायाम् ॥ बधस्यस्थानम् ॥

बधाङ्ककम् । न॰ कारावेश्मनि ॥

बधार्ह: । त्रि॰ हननयोग्ये ॥ बध्ये ॥

बधी । त्रि॰ बधकर्त्तरि ॥

बधिर: । त्रि॰ एडे । श्रवणशक्तिहीने बहरा॰ इ॰ भा॰ ॥ बाधिर्यनिदानन्तु । यदाशब्दवहं वायु: स्रोतआवृत्यतिष्ठति । शुद्ध:श्लेष्मान्वितोवापिबाधिर्यन्तेनजायते ॥ औषधं यथा॰ । कर्णशूलेकर्णनादेबाधिर्य्ये क्ष्वेडएवच । चतुर्ष्वपिचरोगेषुसामान्यंभेषजंस्मृतम् ॥ शृङ्गवेरञ्च मधुचसैन्धवं तैलमेवच । कटूष्णं कर्णयोर्धार्यमेतत्स्याद्वेदनापहम् ॥ इ॰ ॥ बाधिर्यंबालवृद्धोत्थं चिरोत्थञ्चविवर्ज्जयेत् । बध्नाति कर्णौ र॰ बध्यते वा बन्धबन्धने । इषिमदिमुदातिकिरच् ॥ भिन्नकर्णे ॥ हितंमितंमनोरम्य वच: श्रीकृष्णप्रोक्तवचस्यत् । श्रुत्वायो नगृह्णातिबधिर: सप्रकीर्त्तित: ।

बधोद्यत: । त्रि॰ परवधायोद्युक्ते । सन्नद्धे । आततायिनि ॥

बध्य: । त्रि॰ बधार्हे । शीर्षच्छेद्ये किन्त्वयानश्रुतंलोकेश्ववध्या: स्त्रियोषित: । हीनवर्णोपभुक्तायात्याज्या

बध्यापिवाभवेत् ॥ अवध्यायथा । गोब्राह्मणंकृद्रमथापिमुग्नं बालंस्वबन्धुंललनांसुदुष्टाम् । कृतापराधान पिनैववध्याचार्यमुख्यादागुरवस्तथैवेति ॥

बध्यपाल : । पुं० कारागृहरचके ॥

वध्रम् । न० नागे । सीसके सीसा० इ०भा० ॥ बध्यतेऽनेन । सर्वधातुभ्य ष्ट्रन् ॥

वध्री । स्त्री० वध्रीम् । वरत्रायाम् । चर्मरज्जौ । वरत० लाव० इ० भा० ॥ बध्यतेऽनया । ष्ट्रनःषित्वान्ङीष् ।

बन्ध : । पुं० आदौ ॥ बन्धने ॥ बन्ध : करणाशुद्धिरूपेज्ञानप्रतिवर्न्धे । कर्तृत्वाद्यभिमाने ॥ विपर्ययादिष्यते बन्ध : । विपर्ययात्०अतत्त्वज्ञानात् सच०प्राकृतिकवैकारिकदाक्षिणिकभेदात्त्रिविधतल्लक्षणंच व्याख्यानतोऽवगन्तव्य: ॥ पुनर्बन्धोद्विविध: । तीव्रोमृदुश्चेति । तत्रसुरसम्पत्० साक्षादेवकर्महेतुत्वात्तीव्रोबन्ध : । दैतमात्रप्रतीतिस्तुस्वयमकर्महेतुत्वान्मृदुबन्धइति ॥ बध्यतेऽनेनवा । बन्ध० । हलश्चेतिघञ् ॥ गृहादिवेष्टने ॥ शरीरे ॥ निगडादिबन्धने ॥ अनेकान्तवादिमतेतु० नानानिरयसंसरणकारणं मोहादिरष्टविधोगण: स्वातन्त्र्यविघातहेतुत्वाद्बन्ध: । उक्तञ्च । मोहादिकोगणश्चेबबन्धो

जीवस्यकल्पित : । लोहपञ्जरसम्बद्धंयथाक्षिप्तंजलाशये । अलाबुकमधोयातितद्वज्जीव: सबंधनइति ॥ जालंधरोड्डीयनमूलबंधानुजल्पन्ति० कण्ठोदरपायुमूले । बंधत्रयेस्मिन् परिचीनमानेबंध : कुतोदारुणकालपाशे : ॥ इतियोगविद : ॥ षोडशप्रकाररतिबंधे ॥ तेयथा । पद्मासनोनागपदोलतावेष्ठोऽर्द्धसंपुट: । कुलिशंसुन्दरश्चैवतथाकेशरएवच हिल्लोलोनरसिंहो पिविपरीतस्तथापर : । चुम्बोवैधेनुकश्चैवसमुत्कण्ठस्तत : परम् ॥ सिंहासनोरतिनागोविद्याधरस्तुषोडश इतिरतिमञ्जरी । एतेषांलक्षणानितत्तत्त्कब्दे द्रष्टव्यानि ॥ संज्ञाप्रभेदेनान्येऽपिबंधा: सन्ति । यथा कामप्रदोविपरीतोनागरोरतिपाशक: । पीयूष: प्रियतोषश्चतत : समपदस्तथा । ततश्चैकपदोज्ञेय : सम्पुटश्चोर्ध्वसम्पुट : । ततस्तनभरश्चैवततोनूपुरसुन्दर : ॥ ऊरुपीडनमस्तकोत्तंसोत्क्रम : स्मृत : । देहकोष्ठकीलस्तुततोलीलासनस्तथा ॥ अष्टादशक्रमाद्बंधा: स्त्रीणांबहुसुखप्रदा:॥ एतेषांलक्षणानिचकथितानितत्तच्छब्देष्वन्वेष्टव्यानि ॥

बंधक: । पुं० विनिमये ॥ आधौ ॥ रतहिण्डके ॥ सत्यङ्कारे ॥ न० आधौ । यदुक्तमणायभूम्याद्याधीयतेतत्र ॥

ऽप्यग्रहत्वायस्यापितैवस्तुनि ॥ बध्नाति । बंध० । ण्वुल् ॥

बंधकी स्त्री० पुंश्चल्याम् ॥ हस्तिन्याम् बध्नातिमनोयच । बंधबंधने । ण्वुल् । गौ० ङीष् ॥ पञ्चपुरुषगामिन्याम् ॥

बंधनम् । न० बधे । बंधनक्रियायाम् । उद्दाने । बधे । बांधना० इ० भा० ॥ निमित्ते ॥ यथा । नप्रकाशेह मित्युक्तिर्यत्प्रकाशैकबंधना । स्वप्रकाशं तमात्मानमप्रकाश : कथंस्पृशेत् ॥ अहंनप्रकाशे० नभामीत्युक्तिर्वचनं० यत्प्रकाशैकबंधना० स्वप्रकाशस्वरूप प्रकाशएकएवबंधनं निमित्तंयस्या : सातथोक्ता ॥ नप्रकाशइतिव्यवहारस्यप्रकाशानुभव निमित्तत्वादित्यर्थः । तंप्रकाशंस्वयमेवभासमानमात्मानमप्रकाशोऽज्ञानंकथस्पृशेत् आवृणुयात्नकथंचिदित्यर्थ : । चि० प्रमित्याम् । बंधनसाधनेरज्जुनिगडादौ ॥ यथा । बंधनानिकिलसन्तिबहूनिप्रेमरज्जुकृतबंधनमन्यत् । दारुभेदनिपुणोपिषडङ्घ्रिर्निष्क्रियोभवतिपङ्कजबद्धइति ॥ बध्यतेऽनेनास्मिन्वा । बंध० । ल्युट् ॥

बंधनवेश्म । न० कारागारे ॥

बंधनालय : । पुं० कारायाम् । बंधनागारे ॥ बंधनस्यआलय : ॥

बंधस्तम्भ : । पुं० आलाने । हस्तिबंधनस्तम्भे ॥ बंधस्यबंधनस्यस्तम्भः ॥

बंधित्रम् । न० कामदेवे ॥ चर्मव्यजने ॥

बंधु: । पुं० बंधूके । बंधुजीवके ॥ मित्रे । सत्याग्रासहने । भ्रातरि ॥ सगोत्रे । बांधवे । ज्ञातौ ॥ हितकारिणि ॥ संसारबंधनान्मोचनहेतुरात्मैवबन्धुर्नान्य : ॥ सम्बन्धेनोपकर्त्तरि ॥ बध्नातिस्नेहेनमनोय : बध्यतेऽस्मिन्जातिरितिवा । बंध० । शृस्वृस्निहीत्यु : ॥ लग्नाच्चतुर्थभवने वर्णवृत्तान्तरे ॥ भयशोभितमङ्गतकर्णा : शुभसुमङ्गतङ्क्तिकवर्णा : । पन्नगराजनिवेदितबंधू राजतिभूपतिमन्दिबंधु : ॥ यथा । भव्जितवासरनायकचन्द्र : कामिसमूहसमाहिततन्द्रः । दर्शितलोलतडित्करवाल : सोयमुपैतिघनाघनकाल : ॥

बंधुजीव : । पुं० बंधूकवृक्षे । माध्याह्निके । दुपहरिया० फूल० इ० भा० ॥ बंधुरिवजीवंजलमस्य ॥

बंधुजीवक : । पुं० बंधूके ॥ स्वार्थेक:

बंधुता । स्त्री० बंधुसङ्घे ॥ बंधूनांसमूह : । ग्रामजनबंधुभ्यस्तल् ॥

बंधुर : । पुं० स्त्रीचिह्ने ॥ तैलकल्के ॥ बंधूके ॥ बधिरे ॥ हंसे ॥ विडङ्गे ॥ ऋषभौषधौ ॥ न० मुकुटे ॥ बंधने ॥

॥ त्रि° उन्नतानते ॥ रम्ये ॥ नम्रे ॥ बध्नाति । बंध° । मद्गुरादयश्चेतिसाधु : ॥

बंधुरा : । पुं° भूम्नि०सक्तुषु ॥

बंधुरा । स्त्री° पण्ययोषायाम् ॥

बंधुल : । पुं° असतीपुत्रे ॥ बंधून्लाति । आतश्चेतिक : ॥ त्रि° नम्रे ॥ सुन्दरे ॥

बंधूक : । पुं° पीतसालके । सर्जके । प्रियके । विजयसार°इ°भा° ॥ पियासाल°इ°गौ°भा० ॥ न° पुष्पवृक्षवि० । रक्तके । बंधुजीवर्षे । दोपहरिया०मझनिया° इ° भा० ॥ बाँदुली° इ° गौ° भा° ॥ बंधूक : कफकृद्ग्राहीवातपित्तहरो लघु : ॥ बध्नातिचित्तम् । बंध° । उलूकादयश्चेत्यूक : ॥ खधूपे । बन्धूक०इ°भा° । यथा । बंधूकोबंधुजीवेस्यात्खधूपेस्यान्नपुंसकमितिहट्टचन्द्र : ॥

बन्धूकपुष्प : । पुं° पीतसाले । जीवकतरौ । बिजयसार० इ० भा० ॥ बन्धूकस्येवपुष्पाण्यस्य ॥ बीजके ॥

बंधूर : । पुं° विवरे ॥ त्रि° शोभने ॥ नम्रे ॥ बध्नाति । बंध° । खर्जूरादित्वादूर : ॥ उन्नतानते ॥ बंधूरबंधुरौरम्ये नम्रे हंसेतुबंधुरद्वतिरभस: ॥

बन्ध्य : । त्रि° अफले । अवकेशिनि । निष्फले । ऋतुप्राप्तावपिफलरहिते वृक्षादौ ॥ बंधेसाधु : । तत्रसाधुरितियत् ॥ बंधनीये ॥

बन्ध्या । स्त्री° अप्रजस्त्रियाम् । बांझ इ° भा° ॥ अपत्यशून्यायांगवि । वशायाम् ॥ वृषलीविशेषे ॥ यथा । वन्ध्याचवृषलीज्ञेयावृषलीचमृतप्रजा । अपराष्ट्रषलीज्ञेयाकुमारीयारजस्वला ॥ वलाख्यगंधद्रव्ये । बाख्यालके ॥ बध्नाति । बंध० । यत् । अघ्न्यादित्वाद्यवा ॥ योनिरोगविशेषे ॥

बन्ध्याकन्द : । पुं° वन्ध्याकर्कोटक्याम् । बांझखखसा० इ० भा० ॥

बन्ध्याकर्कोटकी । स्त्री° विषकण्टकिन्यामोषधौ । ककोडी०खखसा० इ० भा० ॥ वन्ध्याकर्कोटकीलघ्वी कफनुद्व्रणशोधनी । सर्पसर्पहरीतीक्ष्णाविसर्पविषहारिणी ॥

बभस : । त्रि° भक्षणशीले ॥

बभ्रु : । पुं° वैश्वानरे । अग्नौ ॥ शूलपाणौ । शिवे ॥ गरुडध्वजे । विष्णौ ॥ विशाले ॥ नकुले । स्थूलपुच्छोरक्तनेत्रोबभ्रुर्भेद : सनाकुल : ॥ मुनिभेदे ॥ देशभेदे ॥ यादवविशेषे ॥ सितावरशाके ॥ त्रि° पिङ्गले । पिङ्गलवर्णवति ॥ बिभर्ति० भरतिवा । डुभृञ्° भृञ्०वा । कुर्भश्चेति०कुर्द्वित्वञ्च ॥ खलतौ ॥

बभ्रुज : । पुं° ब्राह्मणे ॥

बभ्रुधातु : । पुं० सुवर्णगैरिके ॥

बर : । पुं० जामातरि ॥ वृतौ ॥ देवतादेरभीप्सिते ॥ षिड्गे ॥ न० कुङ्कुमे ॥ त्वचे ॥ बालके ॥ आर्द्रके ॥ ईषदिष्टे ॥ मनागिष्टे वरंक्लीवेकेचिदाहुस्तदव्ययम् ॥ त्रि० । श्रेष्ठे ॥

बरा । स्त्री० फलत्रिके ॥ गुडूच्याम् ॥ मेदायाम् ॥ ब्राह्म्याम् ॥ विडङ्गे ॥ पाठायाम् ॥ हरिद्रायाम् ॥

बरी । स्त्री० शतावर्याम् ॥

बह्वापक : । पुं० पांशुचामरे ॥

बर्ब्बट : । पुं० राजमाषे ॥

बर्वटी । स्त्री० पण्ययोषायाम् ॥ व्रीहिभेदे ॥

बर्वणा । स्त्री० वृहन्मक्षिकायाम् । नीलायाम् ॥ पश्यान्तस्यादिबर्वणाम् ॥

बर्ह : । पुं० न० मयूरपिच्छे ॥ दले । पत्रे ॥ परिवारे ॥ बर्हति । वृहवृद्धौ ॥ पचाद्यच् ॥ बर्हतेवा । बर्हहिंसायाम् । घञ् ॥

बल : । पुं० हलायुधे । बलदेवे ॥ दैत्यप्रभेदे ॥ मयपुत्रे ॥ अस्यस्थानमतलं । यथा । प्रथमेविवरेविप्रश्चतलाख्ये मनोरमे । मयपुत्रोबलोनामवर्ततेऽखर्वगर्वकृत् । षण्णवत्योये नसृष्टामायासर्वार्थसाधिका: । मायाविनोयाश्चसद्योधारयंतिचकाश्चनेति० दे० भा० ॥ वायसे ॥ वरुणद्रुमे ॥ न० गंधरसे ॥ रूपे ॥ शौर्ये । स्थामनि । शुष्मे । शक्तौ । पराक्रमे ॥ बाहुबलमनोबलोपायबलबंधुबलेषुचतुर्षु ॥ सामादिषु ॥ स्थौल्ये ॥ सैन्ये ॥ तत्षड्विधम् । मौलंभृत्यंसुहृत्श्रेणीद्विषदाटविकंबलमितिभेदात् । तत्र० मित्राटवीबलंचैवमौलंभृत्यबलंतथा । सर्वमेतद्बलंग्राह्यंवर्ज्जयित्वाद्विषद्बलम् ॥ इतिनीति : ॥ देहसामर्थ्ये ॥ परपरिभव निमित्ते शरीरगतसामर्थ्यविशेषे ॥ अवश्यमिदंसाधयिष्यामीत्याग्रहे । स्वोचितैकार्यश्रमाभावप्रयोजकेदार्ढ्ये । कर्मेन्द्रियपाटवे ॥ स्वधर्मानुष्ठानार्यदेहेन्द्रियादिधारणसामर्थ्ये ॥ रसादिशुक्रपर्यन्तपुष्टधातुनिमित्तकम् । चेष्टासुपाटवंयत्तु बलंतदभिधीयते ॥ शुक्रे ॥ त्रि० बलयुक्ते ॥ बलमस्यास्ति । अर्श आद्यच् । बलते० बलतिवा० बल्यतेवा० अनेन । बलसम्बरणे० बलप्राणनेवा । पचाद्यच्० कर्मणिघञ्वा । संज्ञापूर्वकत्वाद्वृद्ध्यभाव : । पुंसीति०घोवा ॥ बलतेऽनेन । खनोघचेतिघोवा ॥ पारिभाविकबलानियथा । विद्याभिजनमित्राणिवृद्धिसत्त्वधनानिच । तप: सहायवीर्याणिदैवञ्चदशमंबलम् ॥ अपिच । अबलस्यबलंरा

जावालस्यरुदितंवलम् । वलंमूर्खस्य मौनन्तुतस्करस्याऽनृतं बलम् । अ-पिच० व्र० । क्षत्रियाणांवलंयुद्धं व्यापारस्त्व लंविशाम् । भिक्षावलंभिक्षुकाणांशूद्राणांविप्रसेवनम् ॥ हरौ भक्तिर्हरेर्दास्यं वैष्णवानांवलंहरि : । हिंसावलंखलानाञ्च तपस्याचतपस्विनाम् ॥ वलंवेशश्चवेश्यानांयोषितांयौवनंवलम् । वलंप्रतापोभूपानां वालानांरुदितंवलम् ॥ सतांसत्यंवलंमिथ्यावलमेवासतांसदा । अनुगानामनुगम : स्वल्पस्वानाञ्चसञ्चय : ॥ विद्यावलंपण्डितानांवाणिज्यंवणिजांवलम् । शश्वत्सुकर्म्मशीलानांगाम्भीर्यंसाहसंवलम् ॥ धनंवलञ्चधनिनांशुचीनाञ्चविशेषत : । वलंविवेक: शान्तानांगुणिनांवलमेकता ॥ गुणोवलञ्चगुणिनांचौराणांचौर्य्यमेवच । विप्रवाक्यञ्चकापथ्यमधर्म्मिणांवलम् ॥ हिंसाचहिंस्रजन्तूनांसतीनांपतिसेवनम् । वर-शापौसुराणाञ्चशिष्याणांगुरुसेवनम् ॥ वलंधर्म्मोगृहस्थानांभृत्यानांराजसेवनम् । वलंस्तव:स्तावकानांब्रह्मच ब्रह्मचारिणाम् ॥ यतीनाञ्चसदाचारोन्यास : सन्न्यासिनांवलम् । पापंवलंपातकिनांसुभक्तानांहरिर्वलम् ॥ पुण्यंवलंपुण्यवतांप्रजानांनृपतिर्वलम् । फलंवलञ्चवृक्षाणांजलधीनांजलंवलम् ॥ जलवलञ्चमत्स्यानांमत्स्यानांचजलंवलम् । शान्तिर्वलञ्चभूपानांविप्राणाञ्चविशेषत : ॥ इ० ॥

वलक्ष : । पुं० शुक्लवर्णे ॥ त्रि०तद्वति॥

वलक्षगु : । पुं० चन्द्रे ॥

वलजम् । न० गोपुरे ॥ क्षेत्रे ॥ सस्ये । सङ्गरे ॥ धान्यराशौ ॥ वलेजातम् । जनी० । ड : ॥ त्रि० भद्राकृतौ । सदाकारे ॥ वलजन्ये ॥

वलजा : । स्त्री० वल्गुदर्शनायाम् । वरयोषायाम् ॥ यूथ्याम् ॥ पृथिव्याम् ॥

वलद : । पुं० जीवके ॥ पौष्टिककर्माङ्गहोमाग्नौ ॥ त्रि० वलदातरि ॥

वलदा । स्त्री० अश्वगन्धायाम् ॥

वलदीनता । स्त्री० ग्लानौ ॥

वलदेव : । पुं० वलभद्रे । प्रलम्बघ्ने । अच्युताग्रजे ॥ अस्यध्यानंयथा । वलदेवंद्विवाहुञ्चशङ्खकुन्देन्दुसन्निभम् । वामेहलायुधधरंदक्षिणेमुसलंकरे ॥ हालालोलंनीलवस्त्रंहेलावन्तंस्मरेत्परमिति ॥ वाते । वायौ ॥ वलेनदीव्यति । दिवु० । अच् ॥

वलदेवा । स्त्री० त्रायमाणायामोषधौ॥

वलप्रसू : । स्त्री० रोहिण्याम् । वलरामातरि ॥ वलस्यप्रसू : ॥

वलभद्र : । पुं० सीरिणि । हलायुधे ॥ वलशालिनि ॥ लोध्रे ॥ गवये ॥ वलंभद्रंश्रेष्ठमस्य । वलेनभद्रइतिवा ।

॥ भगणे ॥

बलभद्रा । स्त्री० त्रायमाणौषधौ ॥ कुमार्याम् ॥ बलेनभद्रा ॥

बलभद्रिका । स्त्री० त्रायमाणौषधौ ॥ बलेनभद्रा । स्वार्थेकन् ॥ माषरोटिकायाम् ॥ चमसीरचितारोटी कथ्यतेबलभद्रिका । रुचोष्णावातला बल्यादीप्ताग्नीनांप्रपूजिता ॥

बलभित् । पुं० इन्द्रे ॥ बलंदैत्यविशेषंभिनत्ति । भिदिर्० । क्विप् ॥

बलभी । स्त्री० वडभ्याम् ॥ कूटागारे॥

बलराम : । पुं० बलदेवे ॥

बलल : । पुं० बलदेवे ॥ बलंलाति । ला० । क : ॥

बलवत् । अ० अतिशये । निर्भरे ॥ बलमस्यास्ति । मतुप् ॥

बलवान् । त्रि० मांसले । अंसले । बलयुक्ते बलमस्यास्ति । मतुप् ॥ प्रबले ।

बलवर्द्धिनी । स्त्री० जीवकौषधौ ॥

बलवल्लभा । स्त्री० वारुण्याम् ॥

बलविन्यास : । पुं० व्यूहे । बलस्य सेनायायुद्धार्थंदेशविशेषेविन्यासो दुर्लङ्घ्यत्वनिमित्तंविभज्यस्थापनम् ॥

बलसूदन : । पुं० इन्द्रे ॥ बलनामानमसुरंसूदितवान्० सूदयति । सूद क्षरणे । नन्द्यादित्वाल्ल्यु : ॥

बलस्थिति : । स्त्री० शिबिरे ॥ बलस्य स्थिति : । बलस्यस्थितिर्यस्मिन्वा ॥

बलहा । पुं० श्लेष्मणि । कफे ॥

बला । स्त्री० वाट्यालके । बाडियाला० इ० गौ० भा० ॥ बलाचतुष्टयस्यनामादिर्यथा । बलावाट्यालिकावाट्याचैववाट्यालकोपिच । महाबलापीतपुष्पासहदेवीचसास्मृता ॥ ततोन्यातिबलाऋष्यप्रोक्ताकङ्कतिकासहा । गाङ्गेरुकीनागबलाझषाह्रस्वगवेधुका ॥ बलाचतुष्टयंशीतंमधुरंबलकान्तिकृत् । स्निग्धंग्राहिसमीरास्रपित्तास्रक्षतनाशनम् ॥ बलामूलत्वचश्चूर्णंपीतंसक्षीरशर्करम् । मूत्रातिसारंहरतिदृष्टमेतन्नसंशय : ॥ हरेन्महाबलाकृच्छ्रंभवेद्वातानुलोमिनी । हन्यादतिबलामेहंपयसासितयासह ॥ अपिच । वाट्यालकोवाट्यपुष्पीसंमांसाविलतावला । श्वेतवाडियाला० इ० गौ० भा० ऋष्यप्रोक्तात्वतिबला पीतपुष्पीमहाबला । पीतवाडियाला० इ०गौ०। भा० ॥ स्निग्धायुष्याबलावृष्याग्राहिणीवातपित्तजित् ॥ बलति । बलसंवरणे । पचाद्यच् । बलमस्यस्या : अर्शआद्यच् ॥ रामायविश्वामित्रेणदत्तायांविद्यायाम् ॥ यथा । क्षुत्पिपासेनतेरामभविष्येतेनरोत्तम । बलामतिबलाञ्चैवपठत : पथिराघवेत्यार्षरामायणम् ॥ शारीरं

बलाधिक्यत्वबलाया : फलम् ।
अतिबलायास्तुफलं भेन : सङ्कल्प
मात्रेणालौकिकार्थसाधनमित्यन
. योविशेष : ।।
बलाका स्त्री० बकजातिविशेषे ।
बिसकण्ठिकायाम् । बगुली० इ०
भा० । जातिवाच्यायांस्त्रियामेव
सर्वदानियत: ।। बलते । बलमंव
रणेसंचरणेच । बलाकादयश्चेतिसा
धु : ।। बलेनअकतिवा । अकक
टिलायांगतौ । अच् । बला
काःकङ्कक्रौञ्चस्याद्बलाकाशशककीपु
च । सारसहंसबलाकाचक्रक्रौंचा
दयोजलप्लवनात् । प्लवसंज्ञा :
कथितास्तु तन्मांसं गुरूष्णं चबलदा
यि ।। अन्ये बकबलाकाद्यागुरव :
प्राणिभक्षणात् ।।
बलाकी । त्रि० बलाकावति ।। बलाका
अस्तिअस्यअस्मिन्वा । त्री०इनि: ।।
बलांचिता । स्त्री० रामवीणायाम् ।।
बलाट : । पुं० मुद्गे ।।
बलात् । अ० हठादर्थे । यथा । बला
त्मन्दर्षयेद्यस्तुपरभार्यांनर : क्व
चित् । वधदण्डोभवेत्तस्यनापराधो
भवेत्स्त्रिया : ।।
बलात्कार : । पुं० प्रसभे । हठे ।।
बलादित्यनिपातोहठे ० इ० स्वामी
।। बलात्करणम् । भावेघञ् ।।
बद्ध्वास्वगृहमानीयताडनाद्यैरूप
क्रमै : । ऋणिकोदाप्यते यत्रबला
त्कार : प्रकीर्तित : ।।
बलात्मिका । स्त्री० हस्तिशुण्डाम् ।।
बलाद्या । स्त्री० बलायाम् ।।
बलाध्यक्ष : । पुं० सेनापतिदशकस्यै
कस्मिन्सेनानायके ।।
बलानुज : । पुं० श्रीकृष्णे ।।
बलामोटा । स्त्री० नागदमन्याम् । वि
षापहायाम् ।। बलामोटाकटुस्ति
क्तालघुपित्तकफापहा । मूत्रकृच्छ्र
व्रणान्रक्षोनाशयेज्जालगर्दभान् ।।
सर्वग्रहप्रशमनीनि : शेषविषनाशि
नी । जयंसर्वत्रकुरुतेधनदासुमति
प्रदा ।
बलाय : । पुं० वरुणद्रुमे ।।
बलाराति : । पुं० शचीपतौ । इन्द्रे
।। बलस्य।सुरस्यअराति : शत्रु : ।।
बलालक : । पुं० पानीयामलके ।।
बलाश : । पुं० ) श्लेष्मणि ।।
बलाशक: । पुं० ) इतिहेमचन्द्र : ।।
बलास : । पुं० कफे ।।
बलाहक : । पुं० मेघे । अम्बुदे ।।
वारिवाहकोबलाहक : । पृषोदरा
दित्वात्पूर्वपदस्यव : उत्तरपदादे
श्चलत्वम् ।। बलाकाभिर्हीयते गम्य
ते । ओहाङ् गतौ० पृ० ।। बले
नहीयतेवा । क्वुन् ।। गिरौ ।। दैत्य
विशेषे ।। नागविशेषे ।। मुस्तके ।।
श्रीकृष्णस्यन्दनाश्वे ।। रमागर्भेऽश्व

कल्किदेवपुत्रे ॥
बलाह्वकन्दः । पुं० गुलञ्चकन्दे ॥
बलिः पुं० दैत्यप्रभेदे । विरोचनात्मजे ॥ करे । राजग्राह्यभागे ॥ चामरदण्डे ॥ उपहारे । उपायने । भेंट० इ० भा० ॥ पूजासामग्र्याम् ॥ नियोज्योपजीव्ये ॥ पञ्चमहायज्ञान्तर्गतभूतयज्ञे ॥ तिर्यग्भिक्षुकादिदाने ॥ ययातिवंशोद्भवसुतपोराजपुत्रे ॥ बलिर्वैश्वदेवनामकपंचयज्ञान्तर्गतयज्ञविशेषे ॥ बलते० बल्यते वा । बलप्राणने० बलसंवरणे संचरणे च । सर्वधातुभ्यइन् ॥ बलनम् । बलदाने । बलते वा । खनिकषीति० इर्वा ॥ यद्वा । वर्णिः सौत्रः । अस्य० वर्णो वलिश्चाहिरण्ये० इतिबलिरादेशः ॥
बलिः । स्त्री० जरयाश्लथचर्मणि ॥ चर्मतरङ्गे ॥ गृहदारुप्रभेदे ॥ जठरावयवे ॥ यथा । एकवलिः शस्त्रमृत्युः स्त्रीभोगीद्विवलिः स्मृतः । त्रिभिराचार्यइत्याहुश्चतुर्भिःस्याद्बहुप्रजः ॥ अवलिस्तुनृपः प्रोक्तोयश्चादानैकतत्परः ॥ विषमावलयोयेषान्ते चागम्याभिगामिनः ॥ ऋज्व्यस्तुवलयोयेषान्ते नराः सुखभागिनः ॥ इति ॥ गन्धर्के ॥ गुडाङ्कुरे ॥
बलिकम् । न० पटलप्रान्ते ॥
बलिकरः । त्रि० बलिकर्त्तरि ॥ बलिंकरोति । दिवाविभेतिट ः ॥
बलिका । स्त्री० अतिबलायाम् ॥
बलिक्रिया । स्त्री० इष्टदेवतापूजाविधौ ॥
बलितः । त्रि० वेष्टिते ॥
बलिदानम् । न० देवोद्देशेनयथाविधिपूजोपहारत्यागे ॥ देवतोद्देशेन सङ्कल्पपूर्वकच्छागादिपशुघातने ॥ बलिदानेनसततंजयेच्छत्रून्नृपान्नृप ॥
बलिध्वंसी । पुं० विष्णौ ॥ बलिमसुरविशेषंध्वंसितुंशीलमस्य । ताच्छील्येणिनिः ॥ बलिनापूजादिना० अविद्यांध्वंसितुंशीलमस्येतिवा ॥
बली । पुं० बलदेवे ॥ माषे ॥ वृषभे ॥ महिषे ॥ उष्ट्रे ॥ शूकरे ॥ कफे ॥ कंदवृक्षे ॥ त्रि०बलवति । उपचिते । मांसले ॥ बलमस्यास्ति । बलादिभ्योमतुवन्यतरस्यामितिपक्षेइनिः ॥
बलिनः । त्रि० बलिभे । श्लथचर्मवति ॥ बलिश्चर्मसङ्कोचोस्यास्ति । पामादित्वान्नः ॥
बलिनन्दनः । पुं० बाणासुरे ॥
बलिनी । स्त्री० बलायाम् । बाट्यालके ॥ बलमस्त्यस्याम् । बलादिभ्योम

तुबन्यतरस्यामितिपचेदूनि : ॥
बलिपुष्ट : । पुं० काके ॥ बलिनापुष्ट : ॥
बलिपोदकी । स्त्री० उपोदक्याम् ॥
बलिप्रिय : । पुं० लोध्रवृक्षे ॥
बलिभ : । त्रि० वलिने । जरयाश्लथचर्मणि ॥ बलिश्चर्मसङ्कोचोस्यास्ति । तुन्दिवलिवटेर्भ : ॥
बलिभुक् । पुं० वायसे ॥ बलिंभुङ्क्ते । भुजपालनाभ्यवहारयो : । क्विप् ॥
बलिमन्दिरम् । न० पाताले ॥ बलेर्मंदिरमत्र ॥
बलिमुख : पुं० बलिमुखे ॥
बलिशम् । न० बडिशे । मत्स्यवेधने ॥ बलिनोमत्स्यान्० श्यति । शोतनूकरणे । आतोनुपेतिक : ॥
बलिष्ठ: । त्रि० बलवत्तमे ॥ अतिशयेनबलवान् । बलशब्दान्मतुबन्तादिष्ठन्प्रत्यय : । विन्मतोर्लुगितिमतुपोलुक् ॥ प्रायश्चित्तंविनापूतास्त्वमेवशुद्धमानसा । अकामायाबलिष्ठेननस्त्रीजारेणदुष्यति ॥
बलिष्णु : । त्रि० अपमानिते ॥
बलिसद्म । न० रसातले । पाताले । बले : सद्म ॥
बलिहा । पुं० विष्णौ ॥
बली । स्त्री० वली । त्वगूर्मौ । चर्मतरङ्गे ॥

बलीकम् । न० नीध्रे । पटलप्रान्ते । छांचौ०इ०गो०भा० । परावली०इभा० ॥ वलति । आवृणोतिभित्त्यादि । बलसंवरणे । अलीकादयश्चेतिकीकन् ॥
बलीमुख : । पुं० वानरे ॥ वलीयुक्तंमुखमस्य ॥
बलीयान् । त्रि० अतिशयेनबलयुक्ते ॥
बलीवर्द : । पुं० वृषे । बैल०बरध०वर्धा०इ०भा ॥ बरणम् । वरईप्सायाम् । सम्पदादित्वात्क्विप् । ईश्वरच०ईवरी । तौददाति आतइतिक : । अतिशयितंबलमस्य । अतइनि: । बलीचासौ०ईवर्दश्च ॥ तीर्थयात्रायांतदारूढस्यदोषोयथामात्स्ये । बलीवर्दसमारूढ: शृणुतस्यापितत्फलम् । नरकेवसतेघोरेगवांक्रोधेहिदारुणे । सलिलञ्चनगृह्णन्तिपितरस्तस्यदेहिनइति ॥
बलु : । स्त्री० हस्तिदंतालिकायाम् ॥
बलूक : । पुं० पद्ममूले । पक्षिविशेषे ॥ वलते । वल० । वलेरूक : ॥
बलूल: त्रि० बलवति ॥ बलंनसहते । बलाट्टल : ॥
बल्मिक : । पुं० न०बल्मीके ॥
बल्मीकि : । पुं० न०बल्मीके ॥
बल्मीक : । पुं० न०वामलूरे । नाकौ । पिपीलिकादिकीटविशेषकृतेमृत्स्तूपे । बावी०इ०भा० ॥ न० रोग

विशेषे । अस्यलक्षणं । यथा । ग्रीवांसकक्षाकरपाददेशेसन्धौगलेवाचिभिरेवदोषैः । ग्रन्थिः सवल्मीकवदुन्नताग्रजातः क्रमेणैवगतप्रवृद्धिः ॥ मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्सर्पतिचोन्नताग्रैः । वल्मीकमाहुर्भिषजोविकारंनिष्प्रत्यनीकंचिरजंविशेषात् ॥ वाल्मीनिमुनौ ॥ वलन्तेप्राणिनोऽत्र । अलीकादयश्चेति कीकन्प्रत्ययोनिपातितः ॥

वल्मीकशीर्षम् । न० स्रोतोऽञ्जने ॥

वल्मीकिः । पुं० वाल्मीकौ ॥

वल्मीकूटम् । न० वल्मीके ॥

वल्यः । पुं० वृक्षभित्तुके । अमगे ॥ न० प्रधानधातौ । रेतसि ॥ त्रि० वलकरे ॥

वल्या । स्त्री० अतिवलायाम् ॥ अश्वगन्धायाम् ॥ शिमृडीत्तुपे ॥ प्रसारिण्याम् ॥

वल्लः । पुं० गुञ्जात्रयपरिमाणे । द्विगुञ्जपरिमाणे ॥ सार्द्धगुञ्जायाम् ॥ वल्लते । वल्लसंवरणे सञ्चरणे च । प० अच् ॥

वल्लकः । पुं० निष्पावे । राजशिम्ब्याम् ॥

वल्लकी । स्त्री० वीणायाम् । विपञ्च्याम् ॥ वल्लते । वल्ल० । क्वुन् । गौरादित्वान्ङीष् । सल्लकीवत्ते ॥

वल्लभः । त्रि० दयिते । प्रिये ॥ अध्यक्षे ॥ न० कुलीनाश्वे । सल्लक्षणतुरङ्गमे ॥ अध्यक्षोऽश्वगवाध्यक्ष इतिस्वामी ॥ वल्लते०वल्ल्यतेवा । वल्ल० । रासिवल्लिभ्यांचेत्यभच् ॥

वल्लभपालः
वल्लभपालकः । पुं० । उत्तमाश्वपाले ॥ अश्वरक्षके ॥

वल्लभा । स्त्री० प्रियायाम् । प्रेयस्याम् ॥

वल्लरम् । न० वल्लूरे ॥

वल्लरिः । स्त्री० मञ्जर्याम् ॥

वष्कयः । पुं० तरुणवत्से । वष्कितो० इ० भा० ॥ वष्कते । वष्कगतौ । वा० अयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् ॥

वष्कयिणी । स्त्री० तरुणवत्सायाङ्गवि० वाखडी० इ० भा० ॥ वष्कयस्तरुणवत्सः । सास्यस्याः । अतइनिठनाविनीनिः । अट्कुप्वाङिति णत्वम् । ङीप् ॥

वहिः । अ० वाह्ये ॥ वहति । वह० इस् ॥ वबयोरभेदः ॥

वहु । त्रि० त्यादिसङ्ख्यासु ॥ विपुले । भूयसि ॥ वंहते । वंहिवृद्धौ ॥ लङ्घिवंह्योर्नलोपश्चेत्युः ॥ स्त्रियां० वह्वादित्वात्०पाक्षिकोङीषभावः । ङीष्पक्षे० वह्वी ॥

वहुकः । पुं० कर्कटे ॥ अर्के ॥ दात्यू

है। अलखातके॥ त्रि॰ बहुभिःक्रीते॥ सङ्ख्यावाचतिगदन्ताया: कन्॥

बहुकण्टक:। पुं॰ क्षुद्रगोक्षुरे। यवासे। हिन्ताले॥

बहुकण्टका। स्त्री॰ क्षुद्रदन्त्याम्॥

बहुकण्टा। स्त्री॰ कण्टकार्याम्॥

बहुकन्द:। पुं॰ शूरणे॥

बहुकन्दा। स्त्री॰ कर्कट्याम्॥

बहुकर:। पुं॰ वक्रग्रीवे। उष्ट्रे॥ त्रि॰ खलपू॥ स्त्रियांबहुकरा॥ बहुकार्यकर्तरि। बहुकरोतिभुवंमार्ष्टि। किंयत्तद्बहुषुकृञोज्विधानमित्यच्॥

बहुकरी। स्त्री॰ बहुकरभार्यायाम्॥ पुंयोगलक्षणोङीष्। सम्मार्जन्याम्॥

बहुकर्णिका। स्त्री॰ आखुकर्ण्याम्॥

बहुकूर्च:। पुं॰ मधुनालिकेरके॥

बहुक्षम:। पुं॰ बुद्धे॥ बहुक्षमते। क्षमूष्॰। ईगुपधज्ञाप्रीकिरः कः॥

बहुगन्धम्। न॰ त्वचे। पुं॰कुन्दुरुके॥

बहुगन्धदा। स्त्री॰ कस्तूर्याम्॥

बहुगन्धा। स्त्री॰ चम्पककलिकायाम्। यूथिकायाम्॥ कृष्णजीरके॥

बहुगर्ह्यवाक्। त्रि॰ कुत्सितबहुवादिनि। जल्पाके। बहुगर्ह्यावागस्य॥

बहुग्रन्थि:। पुं॰ झावुके॥ बहवोग्रन्थयोयस्मिन्॥

बहुच्। पुं॰ प्रत्ययविशेषे। सचप्रकृते: पूर्वंभवति॰ प्रकृतेर्लिङ्गंचभजते:। स्यादीषदसमाप्तौतुबहुच्प्रकृतिलिङ्गक:॥

बहुच्छिन्ना। स्त्री॰ कन्दगुडूच्याम्॥

बहुतन्त्री:। त्रि॰ बहुतन्त्रीविशिष्टे॥ यथा। बहुतन्त्री:काय:। बहुतन्त्रीर्ग्रीवा। बहुतन्त्रिशरीरम्। बह्व्यस्तन्त्र्योयस्मिन्। नाडीतन्त्र्यो:स्वाङ्गे॰ इ॰ नकप्॥

बहुतन्त्रीक:। पुं॰ बहुतन्त्रविशिष्टे। यथा। बहुतन्त्रीक: पट:। बहुतन्त्रीकावीणा। बहुतन्त्रीकंवास:। बह्व्यस्तन्त्र्योयस्मिन्कप्॥

बहुतरकणिश:। पुं॰ रागीधान्ये॥

बहुता। स्त्री॰ बहुत्वे॥

बहुतिक्ता। स्त्री॰ काकमाच्याम्॥

बहुतिथ:। त्रि॰ बहुसङ्ख्याके॥ बहूनांपूरण:। तस्यपूरणेडट्। बहुपूगगणसङ्घस्यतिथुक्॥

बहुतृणम्। न॰ तृणकल्पे॥ ईषदसमाप्तंतृणम्। विभाषासुपोबहुच्पुरस्तात्॥

बहुत्वम्। न॰ बहुतायाम्। बहोर्भाव:। तस्यभावस्त्वतलौ॥

बहुत्वक:
बहुत्वक् पुं॰ भूर्जद्रुमे॥

बहुदुग्ध:। पुं॰ गोधूमे॥

बहुदुग्धा। स्त्री॰ वञ्जुलायाम्। बहुक्षीरायांगवि। बहुदुग्धंयस्याम्॥

बहुदुग्धिका । स्त्री० स्नुहीवृक्षे ॥
बहुधा । अ० अनेकप्रकारे ॥ बहव : प्रकारा: । सङ्ख्यायाविधार्थेधावा ॥ यद्वा । बहुवारान्‌ ० इति० क्रियाभ्या वृत्तिगणने ० विभाषावहोर्धाऽविप्रकृष्टकालइतिधा । बहुधावहुकृत्वोवा दिवसस्यभुङ्क्ते ॥
बहुधान्य : । पुं० वत्सरविशेषे ॥ सुभिक्षंक्षेममारोग्यं प्रशान्ता : पार्थिवा : प्रिये । तस्करोपहृतंवित्तं बहुधान्येवरानने ॥ १२ ॥ अतिशय धान्यविशिष्टे ॥
बहुधारम्‌ । न० वज्रे ॥
बहुनाडि : । त्रि० काये ॥ नाडीतन्त्र्यो : स्वाङ्गइतिनकप्‌ ॥
बहुनाडीक : । त्रि० स्तम्भे ॥ दिवसे ॥ बह्व्योनाड्योयस्मिन्‌ । कप ॥
बहुनाद : । पुं० शङ्खे ॥
बहुनामा । पुं० असङ्ख्यातनामनि परमेश्वरे ॥ बहूनिनामानियस्य ॥ सर्वाण्येतानिनामानिपरस्यब्रह्मणो हरेरितिपुराणोक्ते : ॥
बहुपट : । त्रि० ईषदूनेपटौ ॥ बहुपु ष्कर्मसुदक्षे ॥
बहुपत्र : । पुं० पलाण्डौ ॥ न० अभ्रके ॥ त्रि० अनेकपत्रयुक्ते ॥
बहुपत्रा । स्त्री० तरुणीपुष्पे ॥
बहुपत्रिका । स्त्री० भूम्यामलक्याम्‌ ॥ मेथिकायाम ॥ महाशतावर्याम्‌ ॥

बहुपत्री । स्त्री० खिङ्गिन्याम्‌ ॥ गृहकन्यायाम्‌ ॥ तुलस्याम्‌ ॥ जतुकायाम्‌ ॥ वृहत्याम्‌ ॥ गोरक्षदुग्धायाम्‌ ॥
बहुपर्ण : । पुं० सप्तच्छदवृक्षे ॥ त्रि० अनेकपत्रयुक्ते ॥
बहुपर्णिका । स्त्री० आखुकर्ण्याम्‌ ॥
बहुपर्णी । स्त्री० मेथिकायाम्‌ ॥
बहुपात्‌ । पुं० वटवृक्षे ॥ ॥ बहव : पादाअस्य । सङ्ख्यासुपूर्वस्य ॥
बहुपाद : । पुं० बटवृक्षे ॥
बहुपुत्र : । त्रि० अनेकसुतविशिष्टे ॥
बहुपुत्रा । स्त्री० भूम्यामलक्याम्‌ ॥
बहुपुत्री । स्त्री० शतमूल्याम्‌ ॥
बहुपुष्प : । पुं० पारिभद्रवृक्षे ॥
बहुपुष्पिका । बहुपुष्पी । स्त्री० धातक्याम्‌ ॥
बहुप्रज : । पुं० मुञ्जतृणे ॥ शूकरे ॥ त्रि० अनेकसन्तानयुक्ते ॥
बहुप्रतिज्ञ : । पुं० अनेकपदसङ्कीर्ण पूर्वपक्षविशिष्टव्यवहारे ॥ त्रि० अनेकप्रतिज्ञायुक्ते ॥
बहुप्रद : । त्रि० अतिदातरि । वदान्ये । दानशौण्डे ॥ बहुप्रददाति । प्रे दाज्ञइतिक : ॥
बहुप्रसू : । स्त्री० कृमिलायाम्‌ । बहुसन्तानप्रसवकारिण्याम्‌ ॥
बहुफल : । पुं० कदम्बे । नीपे ॥ वि

कङ्कते ॥ तेज : फले ॥

बहुफला । स्त्री० भूम्यामलकाम् ॥ चविकायाम् ॥ माषपर्ण्याम् ॥ काकमाच्याम् ॥ अपुष्याम् ॥

बहुफलिका । स्त्री० भूवटर्याम् ॥

बहुफली । स्त्री० आमलक्याम् ॥ मृगेर्वारौ ॥

बहुफेना । स्त्री० सातलायाम् ॥

बहुबल : । पुं० सिंहे ॥ त्रि० अतिशयबलयुक्ते ॥

बहुमञ्जरी । स्त्री० तुलस्याम् ॥

बहुमत : । त्रि० बहूनांसम्मते॥ नात्यन्तंसंस्कृतेनैवनात्यन्तंदेशभाषया । कथांगोष्ठीषुकथयँल्लोकेबहुमतोभवेत् ॥

बहुमल : । पुं० सीसके ॥ त्रि० अनेकमलयुक्ते ॥

बहुमार्ग : । पुं० न० चत्वरे ॥ बहूनां मार्ग : समाहारोवा । त्रि० अनेकपथयुक्ते ॥

बहुमूर्ति : । स्त्री० वनकार्पासे ॥ त्रि० नानाकारे ॥

बहुमूर्द्धा । पुं० विष्णौ ॥

बहुमूल : । पुं० इक्कटे ॥ शियौ ॥ स्थूलशरे ॥ त्रि० अनेकमूलयुक्ते ॥

बहुमूलक : । पुं० इक्कटे ॥ न० उशीरे ॥

बहुमूला । स्त्री० शतावर्याम् ॥

बहुमूली । स्त्री० माकन्द्याम् ॥

बहुमूल्य : । त्रि० महाधने । महार्घवस्तुनि ॥

बहुयाज्य : । पुं० अनेकयजमाने ॥ बहवोभूयांसोयाज्यायाजनीयायस्य ॥

बहुरश्मिका । स्त्री० मेदायाम् ॥

बहुरसा । स्त्री० महाज्योतिष्मत्याम् ॥

बहुरुहा । स्त्री० कन्दगुडूच्याम् ॥

बहुरूप : । पुं० शिवे ॥ विष्णौ ॥ धूनके । सर्जरसे ॥ सरटे ॥ स्मरे । कामदेवे ॥ ब्रह्मणि ॥ कुन्तले । केशे ॥ बुद्धप्रभेदे ॥ बालयुवादिरूपे देवनरादिरूपेजीवे ॥ बहुरूपइवाभातिमाययाबहुरूपया । रममाणोगुणेष्वस्याममाहमितितन्यते ॥ नानाकृतिगमकत्वात्० बहूनिरूपाण्यस्य ॥ त्रि० नानारूपयुक्ते ॥

बहुरूपक : । पुं० जाहकजन्तौ ॥

बहुरूपा । स्त्री० दुर्गायाम् ॥

बहुरेखा। स्त्री० प्रचुरदीर्घचिह्नायाम्॥ बहुरेखागुरुकाया:स्त्रियादोषोयथा । रेखाभिर्बहुभि : क्लेशंस्वल्पाभिर्धनहीनताम् । रक्ताभि : सुखमाप्नोतिकृष्णाभि:प्रेष्यतांव्रजेत् ॥

बहुरेता: । पुं० ब्रह्मणि ॥

बहुरोमा । पुं० मेषे ॥ त्रि० लोमशे ॥

बहुल : । पुं० अग्नौ ॥ कृष्णपक्षे ॥ न० विहायसि । आकाशे ॥ सितमरिचे ॥ त्रि० प्राज्ये ॥ कृष्णवर्णे ॥ बहूनर्थान्लाति । ला० । आतो

नुपेतिक्त : ॥ बहुनिर्बीजानिलाति वा ॥
बहुलगन्धा । पुं० एलायाम् ॥
बहुलच्छद : । पुं० रक्तशिग्रौ ॥
बहुलवणम् । न० औवरके ॥
बहुलशल्कल : । पुं० भूर्जे ॥ चारे पियालि ॥
बहुला । स्त्री० नीलिकायाम् ॥ एला याम् ॥ गवि । धेनौ ॥ देवीविशे षे ॥ टाप् ॥
बहुला : । स्त्री० भूम्नि० कृत्तिकासु ॥
बहुलिमा । पुं० । बहुलत्वे ॥ बहुल स्यभाव : । इमनिच् ॥
बहुलीकृतम् त्रि० अपनीततुच्छधा न्येधान्यादौ । पूते ॥ अबहुलंबहु- लमकारि । अभूततद्भावेच्वि : । अ स्च्वौ ॥
बहुवचनम् । न० येनबहवोर्थाउच्यन्त तस्मिन् ॥ बहूनामर्थानांवचनम् । वचे : करणेल्युट् । कर्मणिषष्ठ्या समास : ॥
बहुवल्क : । पुं० प्रियाले ॥
बहुवल्ली । स्त्री० डोडिक्षुपे ॥
बहुवार : । पुं० उद्दाले । शेलौ । श्लेष्मांतके । लसोडा० इ० भा० ॥ बहुवारोविषस्फोटव्रणवीसर्पकुष्ठनु त् । मधुरस्तुवरस्तिक्त: केश्यश्चक फपित्तहृत् ॥ फलमामन्तुविष्टम्भि रूक्षंपित्तकफास्रजित् । तत्पक्वं मधुरंस्निग्धंश्लेष्मलंशीतलंगुरु ॥
बहुवारक : । पुं० श्लेष्मांतके । बहुवा रे ॥ बहून्वारयति । हृञ्० । णि च्च : । अन्शिल्पिसंज्ञयोरपूर्व- स्यापि ॥
बहुविध : । त्रि० विविधे । नानारूपे । पृथग्विधे ॥ बहवोविधायस्य ॥
बहुविस्तीर्णा । स्त्री० कुचिताकाम् ॥
बहुबीजम् । न० गण्डगात्रे । आतृप्ये ॥
बहुवीर्य : । पुं० बिभीतके । तण्ड लीयशाके । शाल्मलिवृक्षे ॥ मरुवे ॥
बहुवीर्या । स्त्री० भूम्यामलक्याम् ॥
बहुव्रीहि : । पुं० प्रायोन्यपदार्थप्रधा नेसमासविशेषे ॥ सचसप्तधा । द्विपद: । बहुपद: संख्योत्तर:० संख्यो भयपद:० दिगन्तराललक्षण: व्यतिहा रलक्षण : सहपूर्वपदश्चेतिभेदात् । त्रि० प्रचुरधान्ययुक्ते ॥
बहुशत्रु : । पुं० चटके ॥
बहुशल्य : । पुं० रक्तखदिरे ॥ त्रि० अनेकशल्ययुक्ते ॥
बहुश : । अ० भूरिशब्दार्थे ॥ बहूनि । बह्वल्पार्थाच्छस्कारकादन्यतरस्या म् ॥
बहुशाख : । त्रि० अनेकभेदे ॥
बहुशाल : । पुं० स्नुह्याम् ॥
बहुशिखा । स्त्री० जलपिप्पल्याम् ॥
बहुश्रवा । स्त्री० शक्लकीतरौ ॥
बहुसम्मति : । पुं० त्वक्सारप्रभेदे ।

वेहुवांस० इ० गो० भा० ॥ त्रि०
अनेकसन्तानवति ॥
बहुसम्पुट : । पुं० विष्णुकन्दे ॥
बहुसार : । पुं० खदिरे ।
बहुसुता । स्त्री० शतमूल्याम् ॥
बहुसू: । स्त्री० शूकर्याम् । बहुप्रसवायाम् ।
बहुसूति : स्त्री० परेष्टुकायाम् । बहु
पत्यायांगवि ॥ बह्वीसूतिर्यस्या : ॥
बहुसन्तानप्रसवायाम् ॥
बहुस्रवा । स्त्री० शल्लकीवृक्षे ॥ नाना
चरणशीलायाम् ॥
बहुस्वन : । पुं० पेचके ॥ त्रि० अनेक
शब्दयुक्ते ॥
बह्वपत्य : । पुं० शूकरे ॥ मूषके ॥
त्रि० बहुसन्तानयुक्ते ॥
बह्वाशी : त्रि० बहुभोजनशीले ॥ बह्वा
शाविशिष्टे ॥
बह्वी । स्त्री० बहुर्थे । बह्वादित्वान्
ङीष् ॥
बह्वृक् । स्त्री० ऋग्वेदे ॥ न० भूक्त
विशेषे ॥
बह्वृच : । पुं० ऋग्वेदिनिब्राह्मणे ॥
बह्व्यऋचोऽध्येतव्यायेन । ऋक्
पूरित्य : ॥
बह्वृची । स्त्री० अध्वर्य्याम् । अध्व
र्युशाखाध्येत्र्याम् ॥ बह्व्यऋचो-
ध्येतव्यायस्यास्तिविग्रह : । अनृच
बह्वृचावध्येतर्येवेतिवचनात् ०
ऋक्पूरित्यप्रत्यय : समासान्त :

। यद्यपि० स्त्रीणांस्वाध्यायाध्ययनं
प्रतिषिद्धम् ० तथापिपुराकल्पे
ह्येतदासीत् । यथा । पुराकल्पे
षुनारीणांमौञ्जीबन्धनमिष्यते ।
अध्यापनञ्च वेदानां सावित्रीवच
नंतथे तियमवचनात् ॥ गोत्रञ्च
चरणै : सहेतिजातित्वान्ङी
ष् ॥
वा । स्त्री० गतौ ॥ गन्धने ॥ तन्तुसं
ताने ॥
वाढम् । न० दृढे ॥ प्रतिज्ञायाम् ॥
भृशे । अतिशये ॥ वाहृते । वाहृ
प्रयत्ने । ओष्ठादि : । गत्यर्थेति
क्तप्रत्यये०क्षुब्धस्वान्तेतिनिपातित
म् । त्रि० अतिशायिनि ॥ क्रिया
विशेषणेऽस्यक्लीवत्वम् । द्रव्यविशे
षणत्वे तद्वाच्यलिङ्गत्वम् ॥
वाण : । पुं० पश्चयवर्गे ।
वाणि : । स्त्री० वस्त्रादीनांवपनक्रिया
याम् । व्यूतौ ॥
वाणिज : । पुं० वणिजि ॥ वाडवा
ग्नौ ॥ पणते । पण० । पणेरिज्या
देश्च : । स्वार्थेप्रज्ञाद्यण् ।
वाणिजक : । पुं० वणिजि । वाडवा
ग्नौ । धूर्त्ते ॥
वाणिज्यम् । न० सत्यानृताख्यवैश्य
वृत्तौ । वणिज्यायाम् । क्रयविक्रया
दिलक्षणे वणिजकर्म्मणि । वणि
जांकर्म्मभावोवा । ब्राह्मणादित्वा

तथ्यञ् ॥
बाणिनी । स्त्री० नर्त्तक्याम् ॥ छेका याम् । मत्तयोषायाम् ॥ विदग्ध वनितायाम् । अवश्यं वणति । वणशब्दे । आवश्यकेति० ग्रह्यादि त्वाद्दाणिनिः । बवयोरैक्यं ॥
बाणी । स्त्री० वाण्याम् ॥
बाध : । पुं० प्रतिबन्धके । व्याघाते ॥ अन्वयानुपपत्तौ ॥ अतिदिष्टपदार्थ निवृत्तौ ॥ ज्ञानान्तरेणविषयासत्त्व प्रतीतौ ॥ न्यायमते साध्याभाव वत्पक्षे ॥ य० । छ्रदोषश्रिमान् ॥
बाधक : । पुं० प्रतिबंधके । आधिक्यं बाधकत्वे हेतुः । बाधते । बाधृ० । ण्वुल् ॥ स्त्रीणांरोगविशेषे । यथा । रक्तमाद्रीतथाषष्ठीचाङ्कुरो जलकुमारकः । चतुर्विधोबाधकः स्यात् स्त्रीणांमुनिविभाषितः ॥ तेषांस्वभावंवक्ष्यामियथाशास्त्रंवि धानतः । एतेषांपूजनंकार्यंज नैःसन्तानकाङ्क्षिभिः ॥ निःसारणंस्थापनञ्चबलिदानंजपस्तथा कर्त्तव्यो गुरुवाक्येन यथाशास्त्रं विचक्षणैः ॥ चतुर्विधोबाधक स्तुजायते ऋतुकालतः ॥ तस्य लक्षणंयथा । व्यथाकट्यांतथानाभेर धः पार्श्वेस्तनेऽपिच । रक्तमाद्री प्रदोषेणजायतेफलहीनता ॥ मास-
मेकंद्वयंवापिऋतुर्योगोभवेद्यदि । रक्तमाद्रीप्रदोषेणफलहीनातदाभवेत् ॥ इतिरक्तमाद्याःनेत्रेहस्ते भवेज्ज्वा लायोनौचैवविशेषतः । लालासंयु तरक्तञ्चषष्ठीबाधकयोगतः ॥ मासे केनभवेद्यस्याऋतुस्नानंद्वयंतथा । मलिना रक्तयोनिःस्यात् षष्ठीबा धकयोगतः ॥ इतिषष्ठाः ॥ उद्वे गोगुरुतादेहेरक्तस्रावोभवेद्बहु । ना भेरधोभवेच्छूलंचाङ्कुरः सतुबाधकः ॥ ऋतुहीनाचतुर्मासंत्रिमासंवाभवे द्यदि । कृशाङ्गीकरपादेचज्वालाचा ङ्कुरयोगतः ॥ इतिचाङ्कुरः ॥ स शूलाचसगर्भाचशुद्धदेहाल्परक्तिका । जलकुमारस्यदोषेणजायते बलहीन ता ॥ याकृशाङ्गीभवेत्स्थूलाबहुका लऋतुस्तथा । गुरुस्तनीस्वल्परक्ता जलकुमारस्यदूषणात् ॥ इतिजलकु मारः ॥ इतिवैद्यकम् ॥ त्रि० बा धाजनके ॥
बाधनम् । न० पीडायाम् ॥ प्रतिबंध के ॥
बाधा । स्त्री० दुःखे । पीडायाम् ॥ नि षेधे ॥ बाधृलोडने । गुरोश्चेत्य : ॥
बाधित: । पुं० हेत्वाभासविशेषे ॥ यस्य साध्याभावः प्रमाणेननिश्चितः स बाधितः । यथा । वह्निरनुष्णोद्रव्य त्वादिति । अत्रानुष्णत्वंसाध्याभावः । उष्णत्वंस्पर्शेनप्रत्यक्षेणगृह्यते०इ-

तिबाधितत्वम् ॥ त्रि० बाधायुक्ते ॥ पीडिते ॥ तारकादित्वादितच् । निवृत्ते ।

बाधिर्य्यम् । न० बधिरत्वे ॥ बधिरस्य भाव : । ष्यञ् ॥ कर्णरोगविशेषे । तस्यनिदानम् बधिरेऽवलोकनीयम् । औषधन्तु । शुष्कमूलकशुण्ठीनां क्षारोहिङ्गुलनागरम् । शुक्तं चतुर्गुणंदद्यात्तैलमेतैर्विपाचयेत् ॥ बाधिर्यकर्णशूलञ्चपूयस्रावश्चकर्णयो : । कृमयश्चविनश्यन्ति तैलस्यास्यप्रपूरणात् ॥

बाध्य : । त्रि० निराकरणयोग्ये । बाधितव्ये । बाधनीये ॥ न्यूनत्वं बाध्यत्वे हेतु : ॥

बांधकिनेय : । पुं० बंधुले । असतीसुते ॥ कौलटेये ॥ बंधक्याअपत्यम् । स्त्रीभ्याढक्त्रिकल्याण्यादित्वादिनङादेशश्च ॥

बांधव : । पुं० मित्रे । सुहृदि ॥ सगोत्रे । बंधौ । ज्ञातौ । स्वजने ॥ बांधवास्त्रिविधा: । आत्मबांधवा:० पितृबांधवा:० मातृबांधवाश्चेति । यथोक्तम् । आत्मपितृष्वसु : पुत्राआत्ममातृष्वसु : सुता : । आत्ममातुलपुत्राश्वविज्ञेयाआत्मबांधवा : ॥ पितु : पितृष्वसु : पुत्रा : पितुर्मातृष्वसु : सुता : । पितुर्मातुलपुत्राश्व विज्ञेया : पितृबांधवा : ॥ मातु : पितृष्वसु : पुत्रामातुर्मातृष्वसु: सुता : । मातुर्मातुलपुत्राश्वविज्ञेया मातृबांधवा: ॥ इति ॥ बंधुरेव । प्रज्ञाद्यण् ॥

बाभ्रवी । स्त्री० दुर्गायाम् ॥ पश्यबाभ्रवीम् ॥

बारक : । पुं० अश्वगतौ ॥ त्रि०निषेधके ॥

बारकी । पुं० शत्रौ ॥ चित्राश्वे ॥ पर्णाजीविनि ॥ पयोधौ ॥

बारकीर : । पुं० द्वारग्राहिणि ॥ वाडवे ॥ यूकायाम् ॥ वेणिवेधिन्याम् ॥ नीराजितहये ॥

बारण : । पुं० मतङ्गजे ॥ न० प्रतिषेधे ॥

बारबाण : । पुं० कञ्चुके ॥

बार्बटीर : । पुं० रङ्गे । चपुणि ॥ आम्रास्थ्नि ॥ अङ्कुरे ॥ गणिकासुते ॥

बाल: । पुं० कुन्तले । चिकुरे । कचे ॥ ॥ अश्वस्यबालके । किशोरे ॥ अश्वस्य बालधौ । इभपुच्छे ॥ नारिकेले ॥ पञ्चवर्षीयहस्तिनि ॥ य० । पञ्चवर्षो गजोबाल : स्यात्पोतोदशवर्षक: । इति ॥ पुच्छे । मत्स्यविशेषे ॥ पुं० न० ह्रीबेरे । बर्हिष्ठे । उदीच्ये । बाला० इ० प्र० गन्धद्रव्ये । सुगन्धिबाला० इ० च० भा० ॥ त्रि० मूर्खे ॥ अविवेकिनि । शास्त्रार्थविवेकज्ञानशून्ये । अल्पप्रज्ञे ॥ अर्भ

के । माणवके ॥ अप्राप्तव्यवहारे ।
पञ्चदशवर्षादनधिकवयस्के इतिक-
श्चित् । षोडशवर्षपर्यन्तप्रथमवय-
स्के ॥ यथा । आषोडशाद्भवेद्बालो-
यावत्क्षीरनिवर्त्तकः । इ० ॥ अत्र
सुश्रुतः । ऊनषोडशवर्षस्तुनरोबा-
लोनिगद्यते त्रिविधःसोपिदुग्धाशी
दुग्धान्नाशीतथान्नभुक् दुग्धाशीवर्ष
पर्यन्तंदुग्धान्नाशीशरद्वयम् । तदुत्तरं
स्यादन्नाशीएवंबालस्त्रिधामतइति ॥
अन्यचाप्युक्तम् । आषोडशाद्भवेद्बा-
लस्तरुणस्ततउच्यते वृद्धः स्यात्
सप्ततेरूर्द्ध्वंवर्षीयान्नवतेः परम् ॥ इ०
॥ अनाथबालस्यरक्षाकारिकाःसर्वदेव
ताः ॥ अथबालपरिचर्याविधिः ।
बालमङ्केसुखंदद्यान्नचैनंतर्ज्जयेत्क्व
चित् । सहसाबोधयेन्नैवनायोग्यमु-
पवेशयेत् ॥ अयोग्यमुपवेशनासमर्थ
म् । नाशयस्थापयेत्क्रीडेनक्षिप्र-
शयनैश्चित् । रोदयेन्नक्वचित्कार्य
विधिमावश्यकंविना ॥ आवश्यकौ-
विधिर्भेषजदानतैलाभ्यङ्गोद्वर्त्तना-
दिः । तच्चित्तमनुवर्त्ततसदैवानु-
मोदयेत् । संसेवितमनाएवंनित्य-
मेवाभिवर्द्धयेत् ॥ वातातपतडिद्वृ-
ष्टिधूमानलजलादितः । निम्नोच्च-
स्थानतश्चापिरक्षेद्बालंप्रयत्नतः ॥
बालस्यस्वभावहितान्याह । अभ्यङ्गो
द्वर्त्तनेस्नानंनेत्रयोरञ्जनंतथा । वस

नंमृदुयत्तच्चतथामृद्वनुलेपनम् ॥
जन्मप्रभृतिपथ्यानिबालस्यैतानि-
सर्वथा ॥ बालस्यकवलादेः समय
माह । कवलः पञ्चमाद्वर्षाद्विंशते-
श्चैवमैथुनमिति ॥ बलति । बलप्रा-
णने । ज्वलितीतिणः । बाडते ।
बाडृआप्लाव्ये । पचाद्यच् वा ॥
यद्वा । बल्यते । बलसंवरणे । कर्म
णिघञ् ॥ बालयति अस्मात्प-
चाद्यज्वा ॥ ऊनैकादशवर्षस्यपञ्चव
र्षाधिकस्यच । चरेद्गुरुः सुहृद्वापि
प्रायश्चित्तंविशुद्धये ॥ ततोन्यूनतर
स्यास्यनापराधोनपातकम् । नचा
स्यराजदण्डोपिप्रायश्चित्तंनविद्यत
इत्यङ्गिराः ॥

बालकः । पुं० शिशौ ॥ अश्वे ॥ हयबाल
धौ ॥ हस्तिपुच्छे ॥ अङ्गुरीयके ।
ह्रीवेरे । सुगन्धिबाला० इ० प्र० ॥
बालकंशीतलंरूक्षंलघुदीपनपाचन-
म् । हृल्लासारुचिवीसर्पहृद्रोगस्त्व-
तिसारहृत् ॥ बलये । केशे ॥ निर्व-
ले० ॥

बालकप्रिया । स्त्री० इन्द्रवारुण्याम्
॥ कदल्याम् ॥

बालकृमिः । पुं० केशकीटे ॥

बालक्रीडनम् । न० बालकखेलाया-
म् ॥

बालक्रीडनकः । पुं० कपर्द्दके ॥

बालखिल्यः । पुं० तपोविशेषलब्ध-

तिरविजोधरणीसुतोवामूलर्चंहस्त-मघरेवतिमैत्रर्भषु । क्षचोपभङ्गप तनानिचसैनिकानांसर्वचलोकम रणंजलधौतदेश : ॥ ( ०#० ) मांसास्थीनिसमादायश्मशानाद्गृह वायसा : । श्वाशृगालोथवामध्ये पुरस्यप्रविशन्तिचेत् ॥ विकिर न्तिगृहादौचश्मशानंसामहीभवेत् । चौरैणहन्यतेलोक : परचक्रस मागम : ॥ सङ्ग्रामश्चमहाघोरो दुर्भिक्षंमरकंतथा । अद्भुतानि प्रसूयन्ते तस्यदेशस्यविद्रव : ॥ दे वीमाहात्म्यपाठेनभैरवस्यस्तवेनच । अत्रशान्तिर्भवेन्नूनंतुलस्याविष्णु पूजनात् ॥

मरकतम् । न० हरिद्वर्णमणिवि-शेषे गारुत्मते । अश्मगर्भे- । हरिन्मणौ । पन्ना० इ० सा धारणलोकभाषाप्रसिद्धे ॥ अस्य लक्षणंयथा ॥ स्वच्छस्वच्छायंस्नि ग्धंगात्रस्वमार्दवसमेतम् । अव्य ङ्गंबहुरङ्गंशृंगारीमरकतंशुभंविभृ यात् ॥ कुलक्षणंयथा । शर्करि लकलिलरूक्षंमलिनंलघुहीनकान्ति कल्माषम् । त्रासयुतंविकृताङ्गं मरकतममरोपिनोपभुञ्जीत ॥ प रीक्षादिकन्त्वन्यत्रद्रष्टव्यम् ॥ म रकंतरन्त्यमेन । तृ० । अ-न्यैक्षपीतिङ : ॥

मरकतपत्रिका । स्त्री० )

मरकतपत्री । स्त्री० पाच्याम् ॥

मरकम् । न० मरकतमणौ ॥

मरणम् । न० वत्सनाभविषे ॥ प-ञ्चतायाम् । कालधर्मे । दृष्टा न्ते । निधने । मृत्यौ ॥ मर णंचेच्छयाकामंदु : खितोपिनवां छति । रोगग्रस्तोपिदीनोपिन-मुमूर्षतिकश्चनेतिभागवतम् ॥ अ-पिच । मरणन्त्वृषिभि : प्रोक्तंसङ्ग रेमङ्गलास्पदम् । यत्तत्समान बलयोर्योधयोर्युध्यतो : क्षितिति ॥ अनुष्ठानासमर्थस्यवानप्रस्थस्यजीर्य त : । भृग्वग्निजलसम्पातैर्मरणा न्तुविधीयते ॥ न्यायमतेन० वि जातीयात्ममन : संयोगध्वंसे ॥ उपात्तानांपूर्वासांनिकायविशिष्टा-नांदेहेन्द्रियमनोबुद्ध्यहङ्कारबुद्धिवेद नानांपरित्यागे ॥ नत्वात्मनोपि नाश : तस्यकूटत्वात् ॥ मरणं-प्राणविच्छेदोनतुनाश : सतोम त : । मृङ्प्राणत्यागइत्युक्तंस्व यंनष्ट : कथंत्यजेत् ॥ मृङोल्युट् ॥ लग्नाष्टमभवने ।

मरत : । पुं० मरणे । म्रियते। मृङ्प्राणत्यागे । भृमृदृशियजिप र्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥

मरन्द : । पुं० )

मरन्दक : पुं० ) मकरन्दे ॥

मरहट्टा । पुं० मात्रावृत्तप्रभेदे ॥ यथा । आदौकुरुषट्कलऽमचतुष्कलप श्चानन्दमितोपि०दशवसुकादश भवतिवशमधिकशुभामवलोपि । विंशतिनवसङ्ख्यंभणितसुमुख्यंन न्दितगुणगणकोटिमरहट्टावृत्तंकि लजयकृतृतेकृतरिपुविनतकरोटि ॥ यथा । अभिमतधनदातासिद्धि विधाताजगदन्तरगतशील०दुरितद्रु मदाहीविश्वविगाहीकल्पचयकृत लील०भुवनचयवंदितहरशिरसिस्थि रवास०दहतुतवहपापंदेहिदुरापंव मुहततिमिरविलास ॥

मराकालो । स्त्री० वृश्चिकाल्याम् ॥

मराल : । पुं० राजहंसे ॥ कारण्डवे ॥ कज्जले ॥ वारिवाहे ॥ तुरङ्गमे ॥ दाडिमीविपिने ॥ त्रि० खले ॥ त्रि० मसृणे ॥

मरालक : । पुं० कलहंसे ॥

मरिचम् । न० कोलके । कृष्णे । ऊषणे । धर्म्मपत्तने । कालीमिरच० इतिभाषा० ॥ मरिचंकटुकं तीक्ष्णंदीपनंकफवातजित् । उष्णं पित्तहरंरूक्षंश्वासशूलकृमीन्हरेत्॥ तदार्द्रंमधुरंपाकेनात्युष्णंकटुकंगु रु । किञ्चित्तीक्ष्णगुणंश्लेष्मप्रसे किस्यादपित्तलम् ॥ म्रियतेविषम नेन । मृङ्प्राणत्यागे । वाहुलका दिच : ॥ कक्कोले । पुं० मरुवक वृक्षे ॥

मरिचपत्रक : । पुं० अजकर्णे । मा लतरो : प्रभेदे ॥

मरिमा । पुं० मृत्यौ ॥ म्रियते । मृङ्० । जनिमृङ्भ्यामिमनिच् ॥

मरिष्यमाण : । त्रि० आसन्नमरणे ॥

मरीचम् । न० वेल्लजे । मरिचे । कृष्ण मरिच० इ० भा० ॥ म्रियतेविष मनेन । मृङ्० । वाहुलकादीच: ॥

मरीचि : । पुं० ब्रह्मणोज्येष्ठमानस पुत्रे० मुनिविशेषे ॥ प्रजापतौ ॥ मरुतांमध्येभगवद्विभूतौ ॥ पुं० स्त्री० चन्द्रसूर्ययो : किरणे । गभ स्तौ ॥ षट्त्रसरेणुपरिमाणे० इति वैद्या : । म्रियतेतमोऽस्मिन् । मृ कणिभ्यामीचि : ॥ त्रि० कृपणे ॥

मरीचिका । स्त्री० मृगतृष्णायाम् ॥ ग्रीष्मे मरुदेशसिकतादावर्ककरा: प्र तिफलिता : दूरस्थानांजलत्वेना- भांति० तद्वाचिकामृगतृष्णिकेति० टीकाकार : ॥ मरीचिरिव । इवे- प्रतिकृताविति कन् ॥

मरीचिप : । पुं० तपोविशेषाल्लब्धे- तिसंज्ञे तापसान्तरे ॥ चद्रिकापा यिनि ॥

मरु : । पुं० गिरौ । पर्वते ॥ धन्व- नि । दशेरके । निरुदकदेशे । मा रवाड० इ० भाषा ॥ गुर्जरात्पू र्वभागेतुद्वारिकातोहिदक्षिणे । म

रुदेशोमश्दशानिउष्ट्रात्पत्तिपरायणा: ।। स्त्रियन्तेप्राणिनोऽत्र । मृङ्० । भृमृशीत्यु : ॥ मरुवकवत्त्व ।। सूर्यवंशीयभाविनृपविशेषे ॥

मरुक : । पुं० मृगविशेषे ॥ मयूरे ॥

मरुकान्तारम् । न० रामबाणेनशोषितेदेशविशेषे ॥ आफ्रिका० इ० इङ्गभा० ॥

मरुज : । पुं० नखीनामगन्धद्रव्ये । व्याघ्रनखाख्ये ॥ त्रि० मरुदेशजाते ॥

मरुजा । स्त्री० मृगेर्वारी ॥

मरुटा । स्त्री० )

मरुण्डा । स्त्री० )उच्चललाटायामस्त्रियाम् ॥

मरुत् । पुं० समीरे । वायौ ॥ म्रियंतेऽनेन० इर्थे न० विनावा । मृङ्० । मृग्रोरुति : ॥ देवे । सुरे ॥ सप्तसप्तकेगणे ॥ मरुवके । न० ग्रन्थिपर्णे ॥ स्त्री० पृक्कायाम् ॥ मरुदग्निप्रदोष्टद्यस्तिक्तोष्णा : पित्तलोलघु : । वृश्चिकादिविषघ्न प्रवातकुष्ठकृमिप्रणुत् ॥

मरुत : । पुं० वायौ ॥ अव्युत्पन्नोयम् । मरुत : स्पर्शन : प्राणइतिविक्रमादित्यादिकोषात् । कोयंवातिसदाक्षिणात्यमरुतइतिकविराज : ॥ घण्टापाटलिवृक्षे ॥

मरुत्कर : । पुं० राजमाषे ॥

मरुत्त : । त्रि० वायुविशिष्टे । मरुत : सन्त्यत्र । तप्पर्वमरुद्भ्यामितितप् ॥ चन्द्रवंशीयनृपविशेषे ॥

मरुत्तक : । पुं० मरुवके ॥

मरुत्पथ : । पुं० आकाशे ॥

मरुत्पुत्र : । पुं० हनुमति ॥ भीमसेने ॥ मरुत : वायो : पुत्र : ॥

मरुत्प्लव : । पुं० कण्ठीरवे । सिंहे ॥

मरुत्फलम् । न० घनोपले ॥

मरुत्वान् । पुं० इन्द्रे । शचीपतौ ॥ मरुतोदेवता : सन्त्यस्य । मतुप् । झयइतिवत्वम् । तसौमत्वर्थइतिभत्वाज्जश्त्वाभाव : ॥

मरुत्वतीयम् । न० मरुत्वत्वे हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति-गृहमेधाच्छचेति० छ० :॥

मरुत्वत्यम् । न० मरुत्वतीये० हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीत्यत्रस्यचकारात्०यत् ॥

मरुत्सख : । पुं० इन्द्रे ॥ अग्नौ ॥

मरुदान्दोल : । पुं० धविके ॥

मरुदिष्ट : । पुं० गुग्गुलौ ॥

मरुद्रथ : । पुं० आवहप्रवाहादिवायुसमूहे ॥

मरुद्रुमम् । न० वाततूले । ग्रीष्मप्रासे । बुढियाकोसूत० इ० भा० ॥

मरुद्भवा । स्त्री० ताम्रमूलाक्षुपे । खिराइ इ० मौ० दे० भा० ॥

मरुद्रथः। पुं॰ अश्वे। देवरथे॥

मरुद्रुमः। पुं॰ विट्खदिरे। अरिमेदे॥

मरुद्वर्त्म। न॰ आकाशे॥

मरुद्वाहः। पुं॰ धूमे॥ ~ह्नौ॥

मरुद्विपः। पुं॰ उष्ट्रे॥

मरुन्माला स्त्री॰ पृक्कायाम्॥ मरुद्भिर्मल्यते। मलधारणे। घञ्॥

मरुप्रियः। पुं॰ उष्ट्रे॥ मरुर्देशविशेषः प्रियोऽस्य॥

मरुभूः। स्त्री॰ दशेरवीमारवाड॰-इ॰ प्र॰॥ निर्जलदेशे॥

मरुभूरुहः। पुं॰ करीरवृक्षे॥

मरुलः। पुं॰ कारण्डवपक्षिणि॥

मरुला। स्त्री॰ केरलदेशप्रसिद्धायां नद्याम्॥

मरुवः। पुं॰ मरुवके॥

मरुवकः। पुं॰ समीरणे। प्रस्थपुष्पे। फणिज्झके मरुवा॰ इ॰ भा॰-प्र॰पुष्पे॥ पिण्डीतके। श्वसने। करहाटके। मदनद्रुमे। मयनफल इ॰ भाषा॥ मरुं वाति। वा॰। क्वनुशिल्पिसंज्ञयोः॥ व्याघ्रे॥ राहौ॥ खरपत्रे। नागदौना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ क्षुपविशेषे॥ चि॰ भयानके॥

मरुसम्भवम्। न॰ चाणक्यमूलके॥

मरुसम्भवा। स्त्री॰ महेन्द्रवारुण्याम्॥ क्षुद्रदुरालभायाम्॥

मरुस्था। स्त्री॰ क्षुद्रदुरालभायाम्॥

मरूकः। पुं॰ मृगविशेषे॥ मयूरे॥ मर्त्ये॥ मारयति॰ म्रियतेवा। मृ-ङ्॰। मृकणिभ्यामूकोकणाविव्य॰कः॥

मरूद्भवा। स्त्री॰ कार्पास्याम्॥ यवासे। क्षुद्रखदिरे॥

मरोलिः। पुं॰ मकरे। असितदंष्ट्रके। मगर॰ इ॰ भा॰ प्र॰ यादसि॥

मरोलिकः। पुं॰ मकरे॥

मर्कः। पुं॰ देहे। शरीरे॥ बानरे॥ वायौ॥ मर्चति॰ मर्चयतिवा। मर्चिः सौत्रोधातुरितिवहवः। मर्चशब्दे॰ चौरादिकइति॰ मित्रो स्यात्सूचेकैयटः। इणभीकापाशल्यतिमर्चिभ्यः कन्। नचैवंणिलोपस्यानिवद्भावात्॰ कुत्वंनस्यादितिवाच्यम्॰ पूर्वत्रासिद्धे तदभावात्॥

मर्ककः। पुं॰ गलेगण्डखगे। हाडगिल॰ इ॰ गौ॰ दे॰ भा॰॥

मर्कटः। पुं॰ वानरे। लूतायाम्। ऊर्णनाभे॥ सीकरणान्तरे॥ गलेगण्डे। हाडगिल॰ इ॰ भा॰ प्र॰ खगे॥ मर्कति। मर्कः सौत्रोधातुर्गहणे। शकादिभ्योऽटन्॥ स्थावरविषभेदे॥

मर्कटकः। पुं॰ शस्यप्रभेदे॥ वानरे॥ लूतायाम्॥ मत्स्यविशेषे॥ दैत्यवि

शेषे ॥ संज्ञायांकन् ॥
मर्कटतिन्दुक : । पुं० कुपीलौ ।
मर्कटपिप्पली । स्त्री० अपामार्गे ॥
मर्कटप्रिय : । पुं० क्षीरवृक्षे ॥
मर्कटवास : । पुं० आशावस्थे ॥ लूतातन्तौ । मकडीकाजाल० इ० भा० ॥
मर्कटशीर्षम् । न० हिङ्गुले ॥
मर्कटास्यम् । न० ताम्रे ॥ वानरमुखे ॥ पुं० म्लेच्छविशेषे ॥ त्रि० वानरमुखसदृशमुखविशिष्टे ॥
मर्कटी । स्त्री० करञ्जप्रभेदे । मकडाकरेंजुवा० इ० भा० ॥ शूकशिम्ब्याम् ॥ मर्कटीवविविधचेष्टाहेतुत्त्वात् । अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्त्वान्ङीष् ॥
मर्कटेन्दु : । पुं० काकतिन्दुके ॥
मर्कर : । पुं० भृङ्गराजे ॥
मर्करा । स्त्री० निष्फलायाम् ॥ दर्य्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥
मर्ज्जू : । पुं० धावके । रजके ॥ पीठमर्द्दे । स्त्री० शुद्धौ । मार्ष्टि । मृजूशुद्धौ । मृजेर्गुणश्चत्त्यू : ॥ मार्जनंवा ॥
मर्त्त : । पुं० मर्त्यलोके ॥ मानुषे ॥ म्रियन्तेऽत्र । मृङ्० । हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्नितितन् ।
मर्त्य : । पुं० मनुष्ये ॥ म्रियते । मृङ्० । हसिमृग्रिणितितन् । ततः स्वार्थेयत् । प्राक्प्रबोधात्० सर्वोऽपिमर्त्य : ॥ मध्यलोके ॥ म्रियन्तेऽत्रेतिमर्त्य : । हसिमृग्रिणिति० मृङ्धातोस्तन्० मर्त्त : । ततोनवसूरमर्त्तयविष्टेभ्यः स्वार्थेयत् ॥ मर्त्तेभवोवा । दिगादेराकृतिगणत्त्वाद्यत् ॥
मर्त्यमुख : । पुं० यक्षे ॥
मर्त्त्या । स्त्री० मानुषस्त्रियाम् ॥
मर्त्येन्द्रा । स्त्री० मातरि ॥ अभ्निदमन्याम् ॥ राजमातरि ॥
मर्द्दनम् । न० अङ्गस्यमर्द्दने । पादमर्द्दनादौ । संवाहने ॥ मृदक्षोदे । ल्युट् । कदने ॥ चूर्णने० । त्रि० मर्दयितरि ॥ मर्दयति । मृदक्षोदे० मृदमर्दनेवा । हेतुमणिजन्तात्कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुज्या ॥
मर्द्दल : । पुं० वाद्यप्रभेदे ॥ मर्दलो मादल इति० नेपालेख्यातो० मृदङ्गसजातीयः ॥ मर्दमुपमर्दंलाति० । ला० । आतङ्गतिक : ॥
मर्द्दित : । त्रि० चूर्णिते ॥ ग्रथिते ॥
मर्द्दिता । त्रि० मर्द्दिनि ॥
मर्द्दी । त्रि० मर्द्दितरि ॥
मर्म्मकील : । पुं० भर्त्तरि ॥
मर्म्मज्ञ : । त्रि० मर्मविदि । तत्त्वज्ञे ॥
मर्म्म । न० स्वरूपे । तत्त्वे ॥ यथा ।

मृगयानविगीयतैनृपैरपिधर्मागममर्म्मपारगैः। स्मरसुन्दरमांयदूत्वजस्तबधर्मः सदयोदयोज्ज्वलाः॥ सन्धिस्थाने॥ जीवस्थाने॥ परदेवेगांबरलीनपाचद्गौतकस्यचित्। नसंवसितसूतकेचनकंवेममर्मणिस्पृशेत्॥ अरुषि॥

मर्म्मरः। पुं॰ वस्त्रविशेषे॥ शुष्कपर्णध्वनौ॥ वस्त्रपर्णानांस्वनिते। मरमरमरडमरड॰ इतिभाषा॥ मर्मरांति। रा॰ कः॥ अनुकरणशब्दोवा॥

मर्म्मरी। स्त्री॰ पीतदारुणि॥

मर्म्मरीकः। त्रि॰ दीनजने॥ म्रियते। मृङ्॰। पर्फरीकादिस्वादीकन्॰धातोर्द्वित्वंरुकचाभ्यासस्य॥

मर्म्मवित्। पुं॰ मर्म्मज्ञे। कार्पटिके॥

मर्म्मवेदी। पुं॰ मर्मविदि॥

मर्म्मस्पृक्। त्रि॰ मर्मपीडके। अरुन्तुदे॥ मर्म्मस्पृशति। स्पृशउपतापे। स्पृशोऽनुदकइति॰ क्विन्॥

मर्म्माविन्द्। त्रि॰ सन्धिस्थानवेधकर्त्तरि॥ मर्म्मज्ञे॥ मर्म्माणिविध्यति। व्यधताडने। क्विप्। ग्रहिज्येतिसम्प्रसारणम्। नहिवृतीतिदीर्घः॥

मर्म्मिकः। त्रि॰ मर्मज्ञे॥

मर्म्मुरः। पुं॰ तुषानले॥

मर्य्यः। पुं॰ मरणधर्म्मणि। मनुष्ये॥

मर्य्या। स्त्री॰ सीमायाम्॥

मर्य्यादा। स्त्री॰ सीमनि। अवधौ। तेनविनेत्यर्थे॥ स्थितौ। धारणायाम्। सत्पथस्थितौ॥ अनुल्लङ्घनीयायांव्यवस्थायाम्॥ स्थित्यनतिक्रमे॥ कुलभूमौ॥ मर्येतिसीमार्थेऽव्ययम्। तत्रदीयते। डुदाञ्॰। आतश्चोपसर्गेङ्स्यङ्॥

मर्षः। पुं॰ क्षान्तौ॥ मर्षणम्। मृषतितितिक्षायाम्॥ घञ्॥

मर्षणम्। न॰ अपराधेसत्यपिकोपानाविष्करणे। क्षमायाम्। मृष॰ भावेल्युट्॥

मर्षितः। त्रि॰ क्षान्तियुक्ते॥ मृषेः कर्त्तरिक्तः। भावेक्तेक्लीवम्॥

मर्षितवान्। त्रि॰ क्षान्ते॥ मृषेः कर्त्तरिक्तवतुः॥

मर्षी। त्रि॰ क्षमाशीले॥

मलः। पुं॰ न॰ पापे। किल्बिषे॥ विशि। विष्ठायाम्। यथा। मलायत्तंबलंपुंसांशुक्रायत्तन्तुजीवनम्। तस्माद्यत्ने नतंरक्षत्यक्ष्मिणोमलरेतसोइति॥ किट्टे। मणडूरादौ॥ स्वेदादौ॥ वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः। श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणांमलाः॥ वातादिषु। यथा। शरीरदूषणाद्दो

षामलिनीकरणान्मला : । धारणा द्धातवस्तेएव वातपित्तकफास्त्रय: ॥ सर्वेषामेवरोगाणांनिदानंकुपिता-मला : । तत्प्रकोपस्यतुप्रोक्तं विविधाहितसेवनम् । हरेद्वसन्तेश्लेष्माणं पित्तं शरदिनिर्हरेत् वर्षासुशमये द्वायुंप्राग्विकारसमुच्छ्रयात् ॥ अत्र-विशेषमाहमाधव : कफपित्तानिला : पूर्वमध्यान्तेषुव्यवस्थिता : । देहाहोरात्रिवयसांसन्धिष्वपिकफानिलाविति ॥ अस्यार्थ : । कफपित्तानिला : देहाहोरात्रिवयसांपूर्वमध्यान्तेषुयथासंख्यंव्यवस्थिता : । देहस्यपूर्वभागेशिरआरभ्यवक्षोन्ते-कफोव्यवस्थित : । मध्येआमाशय-मारभ्यनाभ्यन्तेपित्तंव्यवस्थितम् । अन्तेनाभ्यधोभागेवायुर्व्यवस्थित: । शिरोमूलत्वात्देहस्येवपूर्वादिकल्पना । अह्नस्त्रिधाविभक्तस्यपूर्व-भागेकफोमध्येपित्तमन्तेवायु : । एवंरात्रेरपिवयसोपिपूर्वभागेबाल्यावस्थायांश्लेष्मामध्येतरुणावस्थायां-पित्तम्अन्तेवृद्धावस्थायांवायु : । सन्धिष्विति । देहाहोरात्रिवयसा-मित्यत्र । तत्रदेहस्यपूर्वभागमध्य-भागयो : सन्धौकफोव्यवस्थित: मध्यभागान्त्यभागयो : सन्धौपक्वाशयाख्योवायु : एतच्चयथासङ्ख्यमित्यतोलभ्यते । अह : सन्धौराल्या-

साकमह : सन्धि : प्रात : सञ्ज्ञकस्तस्मिन्कफ : । अह्नासाकंरात्रे : सन्धि : सायंतस्मिन्वात : । वय: सन्धौबाल्यतारुण्ययो: सन्धौश्लेष्मा तारुण्यवृद्धत्वयो : सन्धौवायुरिति ॥ मृज्यतेऽसौ । मृजूशुद्धौ । मृजेष्टिलोपश्चेतिकल : ॥ मलयति । मल सत्कृतौ॰ अद्न्त : । मलतेवा । मलधारणे । पचाद्यच् ॥ कर्पूरे ॥ त्रि॰ कृपणे । कदर्य्ये ॥

मलघ्न : । पुं॰ शाल्मलीकन्दे ॥ त्रि॰ मलनाशके ॥

मलघ्नी । स्त्री॰ नागदमन्याम् ॥

मलजम् । न॰ पूये ॥ त्रि॰ मलोद्भवे ॥

मलदूषित : । त्रि॰ मलिने ॥ मलेनदूषित : । कर्तृकरणेइतिसमास: ॥

मलद्रावी । पुं॰ जयपाले ॥

मलधी: । पुं॰ कामिनि ॥

मलन : । पुं॰ पटवासे । अंशुकालये ॥ न॰ मर्द्दने । पीडना॰ मलना॰ चु॰ भा॰ ॥

मलपू : । स्त्री॰ काकोदुम्बरिकाया-म् ॥ मलयूस्तम्भकृत्तिक्ताशीतला तुवराजयेत् । कफपित्तव्रणश्वित्रकुष्ठपाण्डर्शकामला : ॥ मलात्पापात् । पुनाति । पूञ्पवने । क्विप् ॥

मलभुक् । पुं॰ काके ॥

मलभेदिनी । स्त्री॰ कटुकायाम् ॥

मलमास : । पुं॰ अधिमासे । मलि

न्तुचे । यस्मिन् मासिनसङ्क्रान्तिः सङ्क्रान्तिद्वयमेव॰। गमलमासः सविज्ञेयोमासस्त्रिंशत्तमोभवेत् ॥ गर्गस्तु । अमावास्याद्वयंयत्ररविसङ्क्रान्तिवर्जितम । मलमासः सविज्ञेयोमासः शुद्धाश्चउत्तरः॥ तथाचब्रह्मसिद्धान्ते । चान्द्रोमासोह्यसङ्क्रान्तोमलमासः प्रकीर्त्तितः ॥ सत्यव्रतस्तु । राशिद्वयंयत्र मासिसङ्क्रमेतद्दिवाकरः । नाधिमासोभवेदेवमलमासस्तुकेवलम् ॥ एकत्रमासद्वितयंयदिस्याद्वर्षेऽधिकंतत्रपरोऽधिमासः । त्रयोदशन्तु श्रुतिराहमासंचतुर्द्दशंक्वापिनचास्तिदृष्टम् ॥ अयंमासश्चान्द्रएवनसौरः । अस्तित्रयोदशोमासः सचश्रुत्यानिगद्यते । असौचान्द्रोनसौरःस्यान्नास्तिसौरस्त्रयोदशः ॥

मलमासत्त्वम् । न॰ रविसङ्क्रान्त्यभावविशिष्टचान्द्रमासत्वे ।

मलय : । पुं॰ ऋष्यमूकप्रदेशान्तरे स्वनामाख्यप्रसिद्धेऽद्रिविशेषे । भाषा ठे । दक्षिणाचले । चन्दनाद्रौ ॥ कृतमालाताम्रपर्णीप्रमुखामलयोद्भवाः ॥ शैलाङ्गे ॥ देशविशेषे । मलैवार॰ इ॰भा॰ ॥ आरामे । नन्दनवने ॥ अष्टादशोपद्वीपान्तर्गतद्वीपविशेषे ॥ मलते । मलधारणे । वल्लिमलितनिभ्य : कयन् ॥

ऋषभदेवस्यपद्मर्मेपुत्रे ।

मलयगन्धिनी । स्त्री॰ उमायाः सखीविशेषे ॥

मलयज : । पुं॰ राहुग्रहे ॥ पुं॰न॰- चन्दने ॥ मलयेजात : । सप्तम्यांजनेड : ॥

मलया । स्त्री॰ त्रिवृतायामोषधौ ॥

मलयाचल : । पुं॰ सह्याद्रिसमीपस्थे॰ शैलविशेषे । दक्षिणाचले ॥ सतांनिसेव्योऽस्तिमवान् भोगिनांमलयाचल : ॥

मलयानिल : । पुं॰ वासन्ते । वसन्तकालिकवायौ ॥

मलयाल : । पुं॰ देशविशेषे ॥ यथा । सुराम्बिकांसमारभ्यमलयाद्यन्तगंशिवे । मलयालाभिधोदेशोमन्त्रसिद्धिप्रदर्शक : ॥

मलयू : । स्त्री॰ मलय्वाम् । काकोदुम्बरिकायाम् ॥ मलंयवति । युज् गुप्सायाम् । क्विप् । बाहुलकाद्दीर्घ : ॥ यद्वा । मलते । मलधारणे । बाहुलकाद्य् : ॥

मलयोद्भवम् । न॰ चन्दने ॥

मलवर्त्म । न॰ गुदे ॥

मलविलासिनी । स्त्री॰शङ्खपुष्प्याम् ॥

मलहन्ता । पुं॰ शाल्मलीकन्दे ॥

मला । स्त्री॰ भूम्यामलक्याम ॥

मलाका । स्त्री॰ दूत्याम् ॥ कामिन्या

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न० पापमोचने ॥ मलस्यदूरीकरणे ॥

मलापहा । स्त्री० नदीविशेषे ॥ यथा। मलापहाभीमरथीचघट्टगायथाचक्र व्यावलसाम्यगागुणैः। मलापहा घट्टगयोस्तथापिपथ्यंलघुस्वादुतरं-सुकाग्निदम् ॥

मलावहम् । न० मलिनीकरणे । पापविशेषे । यथा । कृमिकीटवयोव स्यानद्यानुगतभोजनम् । फलेध: कुसुमस्तेयमधैर्यंञ्चमलावहम् ॥

मलारि: । पुं० सर्वक्षारे । साबन० इ० भा० ॥

मलिनम् । न० दोषे ॥ टङ्कणे । घोले ॥ त्रि० मलयुक्तवस्तुनि । मलीमसे । कच्चरे । मलदूषिते ॥ यथा । यथाभवतिबालानांगगनं मलिनंमलै: । तथाभवत्यबुद्धाना मात्मापिमलिनीमलैरिति ॥ मलैः क्लेशकर्मफलैरात्मा । चन्यचम लैर्घनरजोधूमादिभिराकाशवृत्त्यर्थः ॥ नित्यनैमित्तिकक्रियाख्या गिनि ॥ कृष्णे ॥ दूषिते ॥ मलोऽस्यास्ति।ज्योत्स्नातमिस्रेतिसाधुः ॥ वदा । मलते । मल० । वरु लमन्यत्रापीतीनच् ॥

मलिनमुख : । पुं० वह्नौ ॥ गोलाङ्गूले० मृगी ॥ प्रेते ॥ त्रि० क्रूरे । खले ॥

मलिनात्मा । पुं० कृष्णदेहे ॥ दुष्टचित्ते ॥ नपरिचयोमलिनात्मनां प्रधानम् ॥

मलिनाम्बु । न० मस्याम् ॥

मलिनास्य: । त्रि० खले ॥

मलिनिमा । पुं० कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्यभाव: । इमनिच् ॥

मलिनी । स्त्री० रजस्वलायांनार्याम् । ऋतुमत्याम् ॥ मलोऽस्त्यस्या: । अतइनिठनौ ।

मलिनीकरणम् । न० मलावहे ॥

मलिम्लुच: । पुं० मलमासे ॥ यथा । तमतिक्रम्यतुरवियंदागच्छेत् कथञ्चन । आद्योमलिम्लुचोज्ञेयो द्वितीय: प्रकृत: स्मृत: ॥ यदा दर्शान्तमासमतिक्रम्यतत्पूर्वमासा न्त्यक्षणवृत्तिराशिस्थ: सन्सूर्योऽतिवाह्यगच्छेत् मासान्तरे राश्यन्त रसंयोगंगच्छेत्० तदाद्योऽतिक्रान्तमासोमलिम्लुचोज्ञेय:।मलो सन्म्लोचति० गच्छतीति० मलिम्लुच: । द्वितीयस्तुप्रकृत: शुद्ध: कर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मध्यते । मल० । कुच् । मलिंधृतंम्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्क: ॥

मलिष्ठा । स्त्री० ऋतुमत्यांनार्याम् ॥

मलीमस : । पुं॰ पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति । ज्योत्स्नातमिस्रेतिसाधुः ॥

मलूक : । पुं॰ कृमिविशेषे ॥

मल्ल : । पुं॰ पात्रे ॥ कपोले ॥ मत्स्यभेदे ॥ बलीयसि ॥ झल्ले । निच्छिवौ । बाहुयोधिनि॰ मल्लितिमाख्याप्रसिद्धे ॥ अयञ्चव्रात्यात् क्षत्रियात्सवर्णायांजातः । यथा मनुः । झल्लोमल्लश्चराजन्याद्व्रात्या न्निच्छिविरेवच । नटश्चकरणश्चैव खसोद्रविडएवच ॥ इति ॥ देशविशेषे ॥ यथा । दशार्णानवराष्ट्रञ्चमल्ला : शाल्वा : युगन्धरा : । इति । विराटपर्वणि १ अध्याय : ॥ वर्णसङ्करजातिविशेषे । माला॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ अयञ्च॰ लेटात्तीवरकन्यायांजात : । इ॰ ब्र॰ वै॰ पु॰ ॥ तन्त्रवाय्यांकुन्दकाराज्जात : । इ॰ प॰ पु॰ ॥ नियुद्धकुशलोमल्ल स्तद्वृत्तिस्तपरायण : ॥

मल्लक : । पुं॰ दन्ते ॥ पुं॰ स्त्री॰ दपाधारे ॥ कौशिकायाम् । नारिकेलफलनिर्म्मितेचषके । नरेली॰ इ॰ भा॰ ॥ मल्लते मल्लधारणे । गवुल् ॥

मल्लतूर्य्यम् । न॰ वाद्यविशेषे । महासमे ।

मल्लनाग : । पुं॰ ऐरावते ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लेखहारे ॥

मल्लभू : । स्त्री॰ मल्लभूमौ ॥

मल्लभूमि : । स्त्री॰ रङ्गभूमौ । अखवाटे । अखाडा॰ इ॰ भा॰ ॥ देशविशेषे ॥

मल्लयात्रा । स्त्री॰ माल्लव्याम् । मल्लानांयुद्धार्थंप्रयाणे ॥

मल्लयुद्धम् । न॰ नियुद्धे । बाहुयुद्धे । मल्लानांसङ्ग्रामे ॥

मल्ला । स्त्री॰ नार्य्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ॥

मल्लार : । पुं॰ षड्रागाणांमध्येद्वितीयरागे ॥ मेघमल्लाररागस्यगानंवर्षासुसर्वदा ॥

मल्लारी । स्त्री॰ वसन्तरागस्यरागिण्याम् ॥ यथा । आन्दोलिताचदेशाख्या लोलाप्रथममञ्जरी । मल्लारीचेतिरागिण्योवसन्तस्यसदानुगा : ॥ मेघरागस्यरागिण्याम् ।

मल्लि : । पुं॰ दृक्षादिविशेषे ॥ स्त्री॰ मल्लिकायाम् ॥ मल्लते । मल्ल॰ । सर्वधातुभ्यइन् ॥

मल्लिक : । पुं॰ मलिनचञ्चुचरणयुक्तेहंसविशेषे । किञ्चिद्धूम्रवर्णैश्चञ्चुचरणैरुपलक्षितहंसप्रभेदे ॥ मल्लते । मल्ल॰ । इन् । स्वार्थेक : ॥

मल्लिका । स्त्री॰ तृणशून्ये । भूपद्याम् ।

। शतभीरी । वेल्लि॰ वेला॰ वेली॰ इ॰ प्र॰ पुष्पवृक्षे ॥ मल्लतेगन्धं॰ मल्यतेवा । मल्ल॰ । सर्वधातुभ्यइन् । बाङ्गीष् । स्वार्थेकन् । ह्रस्व : । टाप् ॥ मल्लिकोष्णालघुश्च्याति वातकटुकाहरेत् । वातपित्तास्रदृग्व्याधिकुष्ठारुचिविषव्रणान् ॥ मीनविशेषे ॥ मृत्पात्रविशेषे ॥ पानपात्रे ॥ सर्वेष्वान्तर्गतवृत्तविशेषे ॥ यथा । अशेषगुणाधिकशोभनशोभन सौरभयुद्ववविशुद्धयगते॰ विधिविधिविधेहिविवेकनिधेहिपुरोजगणानिह सगलगौसुमते । विशोभियशोभिरुपेतितवेतिविनिर्मितमल्लिकयैशरते॰ निधेहिनिधेहिमुदंहृदयेसदये यशमम्मधराधिपते ॥ वर्णवृत्तान्तरे ॥ यथा । हारशङ्खक्रमेणमण्डिताष्टवर्णकेन । वर्णिताकुतूहलेनमल्लिकेपिङ्गलेन ॥ यथा । वेदवेदिवालखिल्यमारदादिसंस्तुताय । वस्तुमेनतिः सदैवतुभ्यमम्बुजप्रियाय ॥ भूपदीपुष्पे ॥ मल्लिकाया : पुष्पम् । पुष्पमूलेषुबहुलमिति॰ अनुदात्तादेरञोऽणश्चलुप् । लुपियुक्तवत् ॥ वर्णपात्रे ॥ इ॰ श॰ माला ॥

मल्लिकाच: । पुं॰ किञ्चिद्धूमवर्णैस्तस्य चरणैरुपलक्षितैर्हंसविशेषे ॥ शुक्लवर्णैर्वेष्टितचञ्चुद्वययुक्ताक्षे । मल्लिकाकारमक्षियस्यशुक्लापाङ्गत्वात् । व

हुव्रीहौसक्थ्यक्ष्णोरितिषच् ॥

मल्लिकाख्य : । पुं॰ मल्लिकाक्षाभिधेहंसे ॥

मल्लिकाख्या । स्त्री॰ मोतिन्याम् । चिपुरमाल्लौतिगौडदेशप्रसिद्धपुष्पे ॥

मल्लिकागन्धम् । न॰ मल्लिकागुरुणि ॥

मल्लिकापुष्प : । पुं॰ कुटजवृक्षे ॥ वरवृक्षे । करुषालिवु॰ इ॰ गौ॰ दे॰ भा॰ । स्वनामख्यातप्रसिद्धपुष्पवृक्षे ॥

मल्लिगन्धि । न॰ मल्लिकागुरुणि ॥ मल्लिकापुष्पस्येवगन्धोयस्य । उपमानाच्चेति॰ इत् ॥

मल्लिपत्रम् । न॰ छत्राके ॥

मल्ली । स्त्री॰ मल्लिकायाम् ॥

मल्लीकर : । चि॰ चौरे ॥

मल्लु : । पुं॰ भालूकी ॥

मवित : । चि॰ बद्धे ॥

मशक : । पुं॰ कीटविशेषे । बद्धतुण्डे । सूच्यास्ये । रात्रिजागरदे । मच्छर॰ इतिभाषा । तन्नाशकधूपोयथा । त्रिफलार्जुनपुष्पाणिभल्लातकशिरीषकम् । लाक्षासर्जरसश्चैवविडङ्गश्चैवगुग्गुलु : । एतैर्धूपैर्मक्षिकाणांमशकानांविनाशनम् ॥ क्षुद्ररोगविशेषे । मस्सा॰ इ॰ भा॰ प्रसिद्धे । यथा । अवेदनंस्थिरंचैव यस्यगात्रेप्रदृश्यते । माषवत्कृष्णमुत्सन्नमनिलेनमशकंदिशेत् ॥ स्थिर

म॰ अचलम् ॥ अश्वचिकित्सायथा । चर्मकीलंजतुमणिं गकांस्तिलका लकान् । उत्कृत्यशस्त्रेणदहेत्क्षा राग्निभ्यामशेषतः ॥ अपिच । ल शुनानान्तुवर्णस्य घर्षैर्मशकनाशनः ॥ इति ॥

मशकी । पुं॰ उदुम्बरवृक्षे ॥

मशहरी । स्त्री॰ चतुष्क्याम् । शयन तिरस्करिण्याम् ॥

मशुनः । पुं॰ कुक्कुरे ॥

मसनम् । न॰ सोमराजीवृक्षे ॥

मसरा । स्त्री॰ मसूरे ॥

मसारः । ) पुं॰ इन्द्रनील
मसारकः । ) पुं॰ मणौ ॥

मसि: । स्त्री॰ लिपिप्रयोजनायाम् । पचाद्युमे । मस्याम् ॥ मस्यति । मसीपरिणामे । इन् ॥ शेफालिका वृन्ते ॥

मसिकूपी । ) स्त्री॰ मस्या-
मसिधानम् । ) न॰ धा-
मसीधाना । ) स्त्री॰ रे ।
मसिकूपिकायाम्

मसिनम् । न॰ सपिंडके ॥

मसिपथ्य: । पुं॰ लेखके ॥

मसिप्रसू: । स्त्री॰ मस्याधारे ॥ मस्या: प्रसू: ॥ लेखन्याम् ॥

मसिमणि: । पुं॰ मस्याधारे ॥

मसिवर्द्धनम् । न॰ रसगन्धे ॥

मसी । स्त्री॰ मेलायाम् । लिपिसाधन विशेषे । कालो॰ इ॰गौ॰भा॰ । स्याही॰ इ॰ भाषा॰ ॥ शेफालिका वृन्ते । मस्यति । मसी॰ । पचाद्यच् । गौरादित्वात् ङीष् ॥

मसीजलम् । न॰ मस्याम् ॥

मसीधानम् । न॰ मस्याधारे ॥

मसीधानी । स्त्री॰ मस्याधारे ॥

मसीना । स्त्री॰ स्वनामाख्यातेधान्ये । उमायाम् ॥

मसीश: । पुं॰ कायस्थे ॥ मस्याईश: ॥

मसुर: । पुं॰ मसूरे । मङ्गल्यके ॥ मस्यति॰ मस्यतेवा । मसी॰ । मसे श्चेत्युरन् ॥ उपधाने ॥ मसुरा । स्त्री॰ वेश्यायाम् । व्रीहिप्रभेदे । टाप् ।

मसुरी । स्त्री॰ पापरोगे । मसूर्याम् ।

मसूर: । पुं॰ व्रीहिप्रभेदे । मङ्गल्यके । मसूरोमधुर:पाकेसङ्ग्राही शीतलोलघु: । कफपित्तास्रजिद्रूक्षोवातलोज्वरनाशन: ॥ मस्यति॰ मस्यतेवा । मसी॰ । मसेरूरन्निति पाञ्चमिकऊरन् । उपधाने ॥

मसूरक: । पुं॰ उपबर्हविशेषे । चातुरे । चक्रगण्डौ । गोलबालिशौ मा॰इ॰भा॰ ॥ मसूरे ॥ स्वार्थे क: ॥

मसूरविदला । स्त्री॰ कृष्णत्रिवृतायाम् ॥ मसूरवद्विदलमस्या: ॥

मसूरा । स्त्री॰ मसूर॰इ॰ प्रसिद्धे ब्रीहिभेदे । मङ्गल्यके ॥ वेश्यायाम् ॥ टाप् ॥

मसूरिका । स्त्री॰ कुट्टन्याम् ॥ मङ्गल्यके ॥ मसूरीरोगे । शीतलाख्यरोगे ॥ मसूराकृतिसंस्थानाःपिडकाःस्युर्मसूरिकाः ॥ अतीसारे ॥ मशहर्याम् ॥ यथोक्तं पाम्रेक्रियायोगसारे । दंशांश्चमशकांश्चैववर्षाकालेनिवारयेत् । मसूरिकाभिः प्रावृत्यमश्चशायिनमुच्युतमिति ॥

मसूरी । स्त्री॰ पापरोगे । रक्तवत्याम् । शीतलाख्यरोगे ॥ चिवृति ॥ रक्तचिवृति ॥

मसृण: । पुं॰ सोमे ॥ त्रि॰ अकर्कशे । अकठिने स्निग्धे ॥ मस्यति । मसी॰ बाहुलकात्॰ ऋण: ॥ यद्वा । समृच्छतीति । ऋणुगतौ ॥ इगुपधेतिक: । पृषोदरादि: ॥

मसृणा । स्त्री॰ उमायाम् । अतस्याम् ॥

मस्कर: । पुं॰ वेणौ । वंशे ॥ मस्कतेऽनेनवा । मस्कगतौ । बाहुलकादर: ॥ यद्वा । मङ्कतेमङ्किमगडने । अर: । आगमशास्त्रस्यानित्यत्वान्ननुम् । मस्करमस्करिणौवेणुपरिव्राजकयोरितिसुट् ॥ रन्धुवंशे ॥

मस्करी । पुं॰ परिव्राजके । भिक्षौ । संन्यासिनि ॥ मस्कनम् । मस्कगतौ । बाहुलकादर: । मस्करोज्ञानं गतिर्वाऽस्यास्ति । मस्करमस्करिणावितीनि: ॥ यद्वा । मस्करोवेणुरस्यास्ति । इनि: ॥ यद्वा । माकृतं कर्म निषिद्धं शीलमस्य । मस्करमस्करिणावितिसाधु: ॥ यद्वा । मकुरवदाचरणम: करणमस्यास्ति । प्राग्वन्निपात: ॥ यद्वा । मङ्कते । मङ्कि॰ । बाहुलकादर: आगमशास्त्रस्यानित्यत्वान्ननुम् ॥ मकरीनिधिर्भेदोवाऽस्यास्ति । पूर्ववन्निपात: । चन्द्रे ॥

मस्तम् । न॰ मस्तके ॥ मस्यतेस्म । मसी॰ । क्त: ॥

मस्तक: । पुं॰ न॰ उत्तमाङ्गे । शिरसि । मूर्द्धनि ॥ स्वार्थेकन् ॥

मस्तकस्नेह: । पुं॰ शिरोमज्जनि ॥

मस्तकाख्य: । पुं॰ शिखरे ॥ वृक्षशिरसि ॥ मस्तकमित्याख्यायस्य ॥

मस्तदारु । न॰ देवदारुणि ॥

मस्तमूलकम् । न॰ शिरोधौ ॥

मस्तिष्कम् । न॰ गोर्दे । मस्तकस्थघृताकारस्नेहे ॥ मस्यते॰ मसनं वा॰ । मसी॰ । क्तिन् । मस्तिं मस्कते । मस्कगतौ । पचाद्यच् । पृषोदरादि: ॥

मस्तु । न॰ दधिभवमण्डे । दधिजले । तोड॰ इ॰ भाषा ॥ दध्नस्तूपरियोभागोघन: स्नेहसमन्वित: । सलोकेसरइत्युक्तोदध्नोमण्डस्तुमस्त्विति ॥ मस्तुक्लमहरंबल्यं लघुभुक्ता-

मिलाषघ्नत् । स्रोतोविशोधनंक्लान्तिकफतृष्णानिलापहम् । अथध्यं-प्रीणनंशीघ्रं भिनत्तिमलसञ्चयम्॥ अपिच । तृष्णाऽस्नं रुचिपित्तदंश्रमहरंवल्यं कषायंसरंभुक्तिच्छन्दकरंतषोदरगदघ्नोर्शार्श्वसां नाशनम् । स्रोतः शुद्धिकरंकफानिलहरंविष्टम्भशूलापहम्पाण्डुश्वासविकारगुल्मशमनंमस्तुप्रशस्तं लघु ॥ मस्यते । मसी॰ । सितमौतितुन् ॥

मस्तुलुङ्गः । पुं॰ मस्तकस्थघृताकारस्नेहे । मस्तिष्के ॥

मस्तुलुङ्गकः । पुं॰ मस्तिष्के ॥

महः । पुं॰ उत्सवे ॥ तेजसि ॥ महिषे ॥ महनम् । महपूजायाम् । घञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । घोषा ॥ यद्वा महति । अच् । यज्ञे ॥

महकः । पुं॰ बहुलामोदे । महका॰ हु॰ भा॰ ॥

महत् । न॰ राज्ये ॥

महान् । पुं॰ ज्ञानक्रियाशक्तिमतिमहत्तत्त्वे । बुद्धितत्त्वे । अध्यवसायलक्षणे ॥ यथा । सविकारात्प्रधानात्तु महत्तत्त्वं प्रजायते । महानितियतः ख्यातिर्लोकानांजायतेसदा ॥ सर्वकार्यापेक्षयाऽधिकत्वात् कारणे॰ हिरण्यगर्भे । प्रथमजे ॥ दुर्गायाम् ॥ महान्व्याप्यस्थितासर्व महान्वाप्रकृतिर्मतेतिदेवीपुराणात् ॥ उष्ट्रे ॥ नवधाभक्तियुक्तश्रोक्तघ्नभक्ते॰ शिवशैवधर्मादौ ॥ त्रि॰ वृहे । विशङ्कटे । बृहति । विशाले । बड़े । विपुले । उत्कटे ॥ अतिप्रमाणे । अप्रमेये । आपातमधुरसांसारिकसुखनिस्पृहे ॥ यथा । महत्सेवांद्वारमाहुर्विमुक्तेस्तमोद्वारंयोषितांसङ्गिसङ्गम् । महान्तस्तेसमचित्ताः प्रशान्ताविमन्यवः सुहृदः साधवोये ॥ महति । मह॰ । वर्त्तमानेपृषद्बृहन्महदितिनिपातितः । मह्यतेवा । महच्छब्दप्रयोगनिषेधोयथा । मङ्खिते लेतयामांसेवेद्योज्योतिषिकेद्विजे । यात्रायांपथिनिन्द्रायांमहच्छब्दोनदीयते ॥ इति ॥ देशादिपरिच्छेदशून्ये सर्वगतेपरमात्मनि ॥

महती । स्त्री॰ नारदस्यवल्लक्याम् ॥ शततन्त्रीवीणामहतीति॰ स्वामी॥ विततायाम् । वृहत्प्रमाणायाम् ॥ वृहत्याम् ॥ वार्त्ताक्याम् ॥ म-ह्यते । मह॰ । वर्त्तमानेपृषदिति साधुः । गौरादिः ॥

महतीद्वादशी । स्त्री॰ अष्टमहाद्वादश्याम् । वामनद्वादश्याम् ॥

महत्तत्त्वम् । न॰ चतुर्विंशतितत्त्वान्तर्गतद्वितीयतत्त्वे । प्रकृतेरुत्पन्ने समष्टिबुद्धिस्वरूपे ॥ तत्पर्यायाश्चोक्ताम

हाभारते । यथा । महानात्मामति
र्विष्णुर्जिष्णुः शम्भुस्तवीर्य्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथाख्याति
र्धृतिःस्मृतिः ॥ पर्य्यायवाचकैः श
ब्दैर्महानात्माविभाव्यते ॥

महत्तरः । पुं॰ शूद्रविशेषे । ग्रामकू
टे । महता॰ इ॰ भा॰ ॥ इ॰ चि॰
काण्डशेषः ॥

महत्युक्थम् । न॰ बृहतीसहस्रस्य
शस्त्रे ॥

महत्त्वम् । न॰ महतोभावे । यथा ।
महत्त्वंषड्विधेहेतुरिन्द्रियंकरणंमतम्
। इ॰ भा॰ प॰ । महत्त्वंषड्विधइ
ति । द्रव्यप्रत्यक्षेमहत्त्वंसमवायसम
बन्धेनकारणम् । द्रव्यसमवेतानां
गुणकर्मसामान्यानांप्रत्यक्षे॰ स्वाश्र
यसमवेतसमवायसम्बन्धेनकारणम्
। इ॰ सिद्धान्तमुक्तावली ॥ स्वाध्यस्त
सर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम् ॥

महत्पुष्पा । स्त्री॰ हस्तिघोषायाम् ॥

महद्ब्रह्म । न॰ अव्याकृते॰ प्रकृतौ॰
त्रिगुणात्मिकायांमायायाम् । स-
र्व्वकार्य्येभ्योऽधिकत्वात्कारणंमह
त्॰सर्वकार्याणांब्रह्मद्धिहेतुत्वरूपात्॰
वृंहणत्वाद्वा॰ ब्रह्मणत्वाद्वा॰ ब्रह्मच
भवत्यव्याकृतम् ॥ महच्चतद्ब्रह्मचे
तिविग्रहः ॥

महद्भूतम् । न॰ परमात्मनि ॥ महत्
ब्रह्मविद्योत्कर्षेणावर्त्तमानत्वात्॰भू
तंपरमार्थसत्यम् । महच्चतद्भूतञ्च ॥

महनीयः । त्रि॰ पूजनीये ।

महर्घ्यता । स्त्री॰ अधिकान्यूनत्वे ॥

महर्द्धिः । स्त्री॰ समृद्धौ । कुवेराधि
क्ये ॥

महर्लोकः । पुं॰ भूरादिसप्तलोकान्त
र्गतचतुर्थलोके ॥ चतुर्मुखदिनस्या
न्तेजगदेतच्चराचरम् । तदादिदग्ध
तेसर्वंत्रैलोक्यंभूर्भुवादिकम् ॥ जन
म्ययान्तितापार्त्तामहर्लोकनिवासि
नः ॥ चतुर्थेतुमहर्लोकेतिष्ठन्तिकल्प
वासिनः ॥ अपिच । महोहिकोटि
र्यत्रास्तेमरीच्यादिमुनिव्रजः ॥ भू-
पृष्ठाद्विकोट्युच्छ्रायोमरीच्यादिमुनि
वृन्दस्थानंमहर्लोकइत्यर्थः ॥

महर्षभी । स्त्री॰ कपिकच्छ्वाम् ॥

महर्षिः । पुं॰ व्यासादिषु ॥ भृग्वा
दिसप्तसु ॥ वेदार्थद्रष्टृषु॰ सर्वज्ञे
षु॰ विद्यासम्प्रदायप्रवर्त्तकेषु ॥ भृ
गुंमरीचिमत्रिञ्चपुलस्त्यंपुलहंक्रतु
म् । वसिष्ठञ्चमहातेजाः सोऽसृजन्
मनसासुतान् ॥ सप्तब्रह्माणइत्येते
पुराणेनिश्चयङ्गताः ॥ महांश्चासौ॰
ऋषिश्च । कृत्स्नस्यवेदस्यदर्शनात् ।
। अन्येतुवेदैकदेशदर्शनादृषयः ॥

महल्लकः । पुं॰ अन्तःपुररक्षके ।
सौविदल्ले । कञ्चुकिनि ॥ महतो
लाति । ला॰ । कः । कः ॥

महल्लिकः । पुं॰ अन्तःपुररक्षके ।

अत्र : पुरस्थायिजनैः ॥ तल्लक्षणं यथा । मुष्कगुल्फोऽनुपस्थोय : स्त्री स्वभावोमहल्लिक : ॥ इति ॥

महः । न० उत्सवे ॥ तेजसि ॥ महनम् ०मह्यतेवा । मह पूजायाम् । सर्व्वधातुभ्योऽसुन् ॥

महसम् । न० ज्ञाने ॥ महति०मह्यतेवा । महः । अत्यविचमितमिन मिरभिलभिनभितपियतिपश्चिप-निमहिभ्योऽसच् ॥ प्रकारे ॥

महा । स्त्री० गोपवल्याम् । पृश्निपर्णीविशेषे ॥ धेनौ ॥ मह्यतेपूज्यते । मह० । खनोघचेति०घ : ॥

महाकच्छ : । पुं० समुद्रे ॥ प्रचेतसि । वरुणे ॥ पर्व्वते ॥ महान्कच्छोयस्य स : । आन्महतद्रत्याऽत्वम् ॥

महाकण्टकिनी । स्त्री० स्नुहीभेदे । विश्वसारके । नागफणीथूहर०इ० भा० । फणिमनसा०हगौ०दे०भा० ॥

महाकन्द : । पुं० लशुने ॥ चाणक्यमूलके ॥ मूलके ॥ रक्तलशुने । राजपलाण्डौ ॥

महाकपित्थ : । पुं० विल्ववृक्षे ॥ महांश्चासौकपित्थश्च । आन्महत : ॥

महाकपित्थाख्य : । पुं० विल्वे ॥

महाकरञ्ज : । पुं० हस्तिकरञ्जके ॥

महाकर्णिकार : । पुं० आरग्वधे ॥

महाकान्ता । स्त्री० पृथिव्याम् ॥

महाकाय : । पुं० वृषाणके । प्रमथविशेषे । शिवद्वारपाले ॥ वृहच्छरीरे ॥ त्रि०तद्वति ॥

महाकार्त्तिकी । स्त्री० रोहिणीनक्षत्रयुक्तायांकार्त्तिकपूर्णिमायाम् ॥

महाकाल : । पुं० महादेवे ॥ प्रमथविशेषे । महाभीमे ॥ लताविशेषे । किम्पाके ॥ अखण्डदण्डायमानविष्णुस्वरूपसमये ॥ उज्जयिन्यांमहाकाल : शाङ्करीतत्रदेवता ॥

महाकाली । स्त्री० एरदेवतायाम् ॥ महाकालपत्न्याम् ॥ जिनानांचतुर्विंशतिशासनदेवतान्तर्गतदेवीविशेषे ॥

महाकाव्यम् । न० सर्गवन्धे ॥

महाकुमुदा । स्त्री० काश्मर्याम् ॥

महाकुम्भी । स्त्री० कटफले ॥

महाकुल : । त्रि० कुलीने । आर्य्ये । सभ्ये । सज्जने । साधौ ॥ महच्चतत्कुलञ्चमहाकुलम् । आन्महतद्रत्याऽत्वम् । महाकुलमस्यास्ति । अच् ॥ महत्कुलमस्येतिविग्रहेवा ॥ न०सत्कुले ॥

महाकुलीन : । त्रि० महाकुले ॥ महाकुलस्यापत्यम् । कुलात्ख :० इत्यनुवृत्तौ । महाकुलादञ्खञौ वितिपक्षेख : ॥

महाकूप : । पुं० पादावर्त्ते ॥

महाकूल : । पुं० सत्कुले ॥

महाकोशफला। स्त्री॰ देवदालीलता याम् ॥

महाकोशलः। पुं॰ देशविशेषे ॥ यथा। गोकर्णेशात् पूर्वभागे आर्यावर्त्तात्तु चोत्तरे। तीरभुक्तात् पश्चिमे तु महापुर्याश्च सर्वतः। महाकोशलदेशश्च सूर्यवंशपरायणः॥

महाकोषातकी। स्त्री॰ हस्तिघोषायाम्। मेनुयां॰ घीयातोरई॰ इ॰ भा॰ प्र॰ शाके ॥ महाकोषातकी स्निग्धा सरा पित्तानिलापहा॥

महाक्रतुः। पुं॰ अश्वमेधे ॥ महांश्चासौ क्रतुश्च ॥

महाखरः। पुं॰ अश्वतरे ॥

महागदः। पुं॰ ज्वरे॥

महागन्धः। पुं॰ कुटजवृक्षे ॥ अम्बुवेतसे॥ न॰ हरिचन्दने॥ महान् गन्धो यस्य॰ यस्मिन् वा॥ बोले ॥

महागन्धा। स्त्री॰ चामुण्डायां देव्याम्॥ केविकापुष्पे ॥ नागबलायाम्॥

महागवः। पुं॰ गवये। वनगवे ॥

महागिरिः। पुं॰ बौद्धभेदे ॥ वृहत्पर्वते ॥

महागुरुः। पुं॰ मातरि। पितरि॥ आचार्ये ॥ यथा। माता पिता ब्रह्मदाता महान्तो गुरवः स्मृताः। इति ॥ महांश्चासौ गुरुश्च। आत्मव तत्त्वात्वम्। स्त्रियाः पतिरेव महागुरुः॥

महागुल्मा। स्त्री॰ सोमवल्ल्याम्॥

महागुहा। स्त्री॰ पृश्निपर्ण्याम्॥

महागोधूमः। पुं॰ पश्चाद्देशभवे गोधूमविशेषे। वङ्गा॰ गोहूं॰ इ॰ भाषा॥

महाग्रहः। पुं॰ सूर्ये॥

महाग्रीवः। पुं॰ उष्ट्रे॥ त्रि॰ वृहत्ग्रीवायुक्ते॥

महाघूर्णा। स्त्री॰ सुरायाम्॥ महती घूर्णा यस्याः यया वा॥

महाघोरः। त्रि॰ अतिशयभयानके॥

महाघोषः। पुं॰ अतिघोषणे। महाशब्दे। न॰ हट्टे। आपणे॥ त्रि॰ वृहच्छब्दयुक्ते॥

महाघोषा। स्त्री॰ कर्कटशृङ्ग्याम्। कुन्दुरुकायाम्॥

महाङ्गः। पुं॰ उष्ट्रे। महान्त्यङ्गान्यस्य। अनेकमितिवहुव्रीहिः। गोधुरके॥ महामूषिके॥ रक्तचित्रके॥ त्रि॰ वृहदवयवयुक्ते॥

महाचञ्चुः। पुं॰ वृहच्चञ्चुमतिखगे॥ शाकविशेषे। सुचञ्चुकायाम्। दीर्घपत्र्याम्। दिव्यगन्धायाम्॥

महाचण्डः। पुं॰ कालस्यभृत्ये॥ त्रि॰ प्रचण्डे॥

महाचीनः। पुं॰ देशविशेषे। यथा कैलासातीरं समारभ्य सरयूं परितः प-

रे । अमरगांमहेशानिमहाधीना भिधोभवेत् ॥

महाच्छद् : । पुं० देवताडवृक्षे । वृहत्पत्रे ॥

महाच्छाय: । पुं० वटवृक्षे । त्रि० वृहच्छायायुक्ते ॥ महतीच्छायाऽस्य ॥

महाच्छिद्रा । स्त्री० महामेदायाम् ॥ त्रि० वृहच्छिद्रयुक्ते ॥

महाज : । पुं० वृहच्छागे ॥ त्रि० महाकुलोद्भवे । महांश्चासावजश्च ॥ महतोजायतेवा ॥

महाजटा । स्त्री० रुद्रजटायामोषधौ ॥ वृहत्यांजटायाम् ॥

महाजन : । पुं० सज्जने । साधौ ॥ यथा । वेदाविभिन्ना : स्मृतयो विभिन्नानाऽसौमुनिर्यस्यमतंनभिन्नम् । धर्मस्यतत्त्वंनिहितंगुहायां महाजनोयेनगत : सपन्था : ॥ महाजनोपर्यनुक्रोशयुक्त : सन्नाहराजाविवेक : । यथा । अा : पाप महामोहहतकसर्वथाहतस्त्वयायं महाजन : । यत : । शान्तेऽनन्तमहिम्निनिर्मलचिदानन्दे तरङ्गावलीनिर्मुक्तेऽमृतसागराम्भसिमनाक्मग्नोपिनाचामति । नि : सारे मृगतृष्णिकार्णवजले श्रान्तोपिमूढ: पिबत्याधावत्यवगाहतेऽभिरमतेमज्जत्यथोमज्जतीति ॥ मन्वादौ । यथा । प्रायेणवेदतदिदंनमहाजनोयंदेव्याविमोहितमतिर्वतमाययालम् । त्रय्यांजडीकृतमतिर्मधुपुष्पितायांवैतानिकेमहतिकर्मणियुज्यमान : ॥

महाजम्बु : । स्त्री० )

महाजम्बू । स्त्री० ) वृहज्जम्ब्वाम् । राजजम्ब्वाम् ॥

महाजव: । पुं० गवये ॥ स्त्रीकारिणि मृगे ॥ त्रि० अतिशयवेगवति ॥

महाजाति : । स्त्री० वासन्त्यामलतायाम् । माधव्याम् ॥ स्वर्णे ॥

महाजाली । स्त्री० पीतवर्णघोषायाम् ॥ राजकोषातक्याम् ॥ जालयति । जालमाच्छादयति । चु० । पचाद्यच् । गौरादि : । महतीचासौजालीच ॥

महाज्यैष्ठी । स्त्री० नक्षत्रविशेषादियुक्तायांज्यैष्ठ्यांपूर्णिमायाम् ॥ अस्याशब्दकल्पद्रुमम् ॥

महाज्योतिष्मती । स्त्री० लताविशेषे । तेजोवत्याम् । बहुरसायाम् । कनकप्रभायाम् । लवणायाम् । वडीमालकांगणी० इ० भा० ॥

महाज्वाल : । पुं० यज्ञवह्नौ । त्रि० स्याम् ॥

महाज्वाला । स्त्री० जिनानांविद्याधरीविशेषे ॥ वृहदग्निशिखायाम् ॥

महाडीनम् । न० पक्षिण : खद्गपतनेनप्रत्यावृत्तौ ॥

महाढ्य : । पुं॰ कदम्बे ॥ त्रि॰ अतिशयधनवति ॥

महातपा : । पुं॰ विष्णौ ॥ महत्सृष्टिविषयं तपोज्ञानमस्य । ऐश्वर्यं प्रतापोवामहदस्य ॥

महातमप्रभा । स्त्री॰ अतिशयान्धकारमयेनरकविशेषे ॥

महातरु : । पुं॰ स्नुहीवृक्षे ॥ वृहद्वृक्षे ॥

महातलम् । न॰ पातालप्रभेदे ॥

महातारा । स्त्री॰ जिनानांदेवीविशेषे ॥

महाताली । स्त्री॰ आवर्त्तक्याम् ॥

महातिक्त : । पुं॰ महानिम्बे ॥ त्रि॰ अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री॰ यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री॰ भल्लातकवृक्षे ॥ त्रि॰ अतिशयतीक्ष्णे ॥

महातुम्बी । स्त्री॰ राजालाब्वाम् ॥

महातेजा : । पुं॰ अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा । तेजस्विनोयदोयेनतेजसाभास्करादय : । ततोजोमहदस्येतिमहातेजा : सईश्वर : ॥ शौर्यंशौर्यादिभिर्धर्म्मैर्महद्भि : समलङ्कृत : । इतिवाख्यान्महातेजा : भनुपातनईश्वर : ॥ न॰ पारदे ॥ त्रि॰ अतिशयतेजस्विनि ॥ महत्प्रकृष्टंतेजस्तेन्यलक्षणमस्य ॥

महात्मा । त्रि॰ महामनसि । महाशये ॥ अत्यन्तशुद्धान्त : करणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहितान्त : करणे । शुद्धसत्त्वे । समुत्पन्नसम्यग्दर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके ॥ सर्वेश्वरे॰ सर्वज्ञे॰ परमात्मनि ॥ अनुद्रबुद्धौ ॥ महानुभावैकजन्मसुकृते : संस्कृत : क्षुद्रकामाद्यनभिभूत : ॰ आत्मा ।॰ अन्त : करणंयस्यस : ॥ महांश्चासावात्माचेतिवा ॥

महात्यय : । पुं॰ चतुर्थके॰ विषमज्वरे ॥ गम्भीरे ॥ मर्हतिकष्टे ॥

महादण्ड : । पुं॰ यमदूतप्रभेदे ॥

महादन्त : । पुं॰ गजदन्ते । ईशादन्ते ॥ दृहद्दन्तमात्रे ॥ त्रि॰ तद्वति ।

महादानम् । न॰ श्रेष्ठदाने । तुलापुरुषादिषोडशप्रकारे ॥ यथा । आद्यन्तुसर्वदानानांतुलापुरुषसंज्ञितम् । । हिरण्यगर्भदानञ्चब्रह्माण्डंतदनन्तरम् ॥ कल्पपादपदानञ्चगोसहस्त्रन्तुपञ्चमम् । हिरण्यकामधेनुश्चहिरण्याश्वस्तथैवच ॥ पञ्चलांगलकंतद्वद्धरादानंतथैवच । हिरण्याश्वरथस्तद्वन्मद्धिरथस्तथा ॥ द्वादशंविष्णुचक्रञ्चतत : कल्पलतात्मकम् । सप्तसागरदानञ्च रत्नधेनुस्तथैवच । महाभूतघटस्तद्व

तृषोऽस्य : परिकीर्त्तित : ॥

महादारु । न॰ देवदारुणि ॥

महादाह : । पुं॰ नरकान्तरे ।

महादेव : । पुं॰ शिवे ॥ महांश्चासौ-देवश्च । कान्महतश्चात्वम् ॥ महान्देवोऽन्त्यादिरूपाक्रीडायस्येतिवा ॥ ब्रह्मादीनांसुराणाञ्चमुनीनांब्रह्मवादिनाम् । तेषाञ्चमहतोदेवोमहादेवःप्रकीर्त्तितः ॥ महतीपूजितावि श्वे मूलप्रकृतिरीश्वरी । तस्यादेवः पूजितश्चमहादेव : सचस्मृतः ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ सर्वदेवानांमहनीयत्वाच्चमहादेवः । तथोक्तंसाम्बपुराणे । पूज्यतेयस्सुरै : सर्वैर्महांश्चैव प्रमाणत : । धातुर्महेतिपूजायांमहादेवस्ततस्मृत : ॥ स्कांदेपि । महतामपिदेवनामहमेवमहान्यत : । नतुमत्तोमहानन्योमहादेवस्ततोह्यहमिति ॥ कोटयोब्रह्महत्यानामगम्यागमकोटय : । सद्य : प्रलयमायान्तिमहादेवेतिकीर्त्तनात् ॥ महादेवमहादेवमहादेवेतिवादिनम् । वत्सं गौरिवगौरीशोधावन्तमनुधावति ॥ चन्द्रोक्तमथव शिरसि । सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महतिमहीयतेतस्मादुच्यतेमहादेवइति । अस्यार्थौविष्णुसहस्रनामभाष्यटीकायांद्रष्टव्य : ॥

महादेवी । स्त्री॰ दुर्गायाम् ॥ महतो-ब्रह्मादीनपिदेवयतिसर्गादिभिर्व्यवहारयति॰ इतिमहादेवी । दिवु॰ । अच् । टित्वान्ङीप् ॥ पूज्यतेयासुरै : सर्वैर्महतीचप्रमाणतः । धातुर्महेतिपूजायांमहादेवीततः स्मृते तिदेवीपुराणम् । सर्वदृश्यंमहादेवी द्रष्टासाक्षीचसैवहीतिदेवीभागवतम् । द्रष्टाजीव : साक्षी॰ ईश्वरः॰ दृश्यंसर्वंजगत्॰ इदंचय सैवभगवती भवतीत्यर्थ: ॥ राजयाम् । महिष्याम् । पट्टदेव्याम् ॥

महादैत्य : । पुं॰ भौत्यमन्वन्तरीयदैत्यविशेषे ॥ उत्कृष्टदैत्ये ।

महाद्युति : । त्रि॰ ईश्वरे ॥ महती-बाह्याभ्यन्तरव्यापिनीद्युतिर्यस्य तन्यलक्षणास्यकामादिपराभवेनस्वहित साधनोन्मुखि॰ पुरुषर्षभे । महती द्युतिरस्य ॥

महाद्रिधृक् । पुं॰ हरौमहान्तमद्रिं-मन्दरंगोवर्द्धनंवाऽमृतमथनेगोरक्षणेवाधृतवानितिव्युत्पत्तिः फलितार्थकथनपरा । वस्तुतस्तुमहाद्रयेधृष्णोति॰ धर्त्तुमप्रगल्भते । ञिधृषाप्रागल्भ्ये । क्विप् । क्विन्प्रत्ययस्यकु : ॥

महाद्रुम : । पुं॰ अश्वत्थे ॥ महांश्चासौद्रुमश्च ॥ वृहद्वृक्षे ।

महाद्रोणा । स्त्री॰ देवकुरुम्बायाम् । दिव्यपुष्पायाम् ।

महाद्रणी । स्त्री॰ महाद्रोणापुषि ॥

महाद्दनूद : । पुं॰ युद्धवाद्ये ॥ पतिक लई ॥

महाधनम् । न॰ महामूल्ये । बहुमूल्ये वस्तुनि । महगो॰ हू॰ भा॰ । सुवर्णे ॥ सिह्लके ॥ चारुवाससि ॥ महद्धनंमूल्यमस्य ॥ कृषिकर्म्मणि ॥ त्रि॰ पतिशयधनयुक्ते ॥

महाधातु : । पुं॰ स्वर्णे ॥

महाध्वग : । पुं॰ उष्ट्रे ॥

महानट : । पुं॰ महादेवे ॥

महानद : । पुं॰ नदविशेषे ॥

महानदी । स्त्री॰ पुरुषोत्तमक्षेत्रान्तर्गतनदीविशेषे । चित्रोत्पलायाम् ॥ गङ्गायाम् ॥ यथा । अम्बुजमम्बुनिजातंजातुनजायतेम्बुजादम्बु । मुरहरतत्रविपरीतंपदाम्बुजायान्महानदीजाता ॥

महानन्द: । पुं॰ मुक्तौ ॥ पधिकाह्लादे ।

महानन्दा । स्त्री॰ अमृतायाम् । सुरायाम् ॥ माघशुक्लनवम्याम् ॥ नदीविशेषे । देवीविशेषे । अट्टहासेमहानन्दादेवी ॥

महानन्दि : । पुं॰ नन्दिवंशमाख्यराजपुत्रे ॥

महानरक : । पुं॰ अतिशयनामाप्रबारयातनास्थाने ॥

महानल: पुं॰ वृहदग्नौ ॥ देवनले ॥

महानवमी । स्त्री॰ आश्विनशुक्लनवम्याम् ॥

महानसम् । न॰ पाकस्थाने । रसवत्याम् ॥ तत्रत्यणीयत्रनामाख्येउक्ता: । यथा । सूदशास्त्रविधानज्ञा: पराऽभेद्या : कुलोद्गता : । सर्वेमहानसेधार्या : कृत्तकेशनखाजना: ॥ इति ॥ पुंल्लिङ्गोप्ययमितिकश्चित् ॥ महच्चतदनश्च । अनोश्माय : सरसांजातिसंज्ञयोरितिसंज्ञायांटच् ॥

महानसाधिकृत : । त्रि॰ पौरोगवे ॥ महानसेऽधिकृत : ॥

महानाटकम् । न॰ हनुमन्नाटके ॥ नाटकविशेषे ॥

महानाडी । स्त्री॰ काण्डरायाम् ॥

महानाद : । पुं॰ कुञ्जरे ॥ वर्षुकाब्दे ॥ महास्वने ध्वनियुक्ते । कर्णे ॥ सिंहे ॥ उष्ट्रे ॥ शङ्खे ॥ कोहलायाम् ॥ महान्नादोयस्यस: ॥

महानिद्रा । स्त्री॰ मरणे ॥

महानिम्ब: । पुं॰ पवर्वते । पार्वते । वकायन॰ द्रेक॰ र्कक॰ हू॰ भाषा । महानिम्बोहिमोरूक्षस्तिक्तोग्राहीकषायक : । कफपित्तक्रमिच्छर्दिकुष्ठहृल्लासरक्तजित् ॥ प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशन:॥

महानिशा । स्त्री॰ निशामध्यभागे । निशीथे ॥ रात्रेर्मध्यप्रहरद्वये ॥

यथा । महानिशातुविज्ञेयामध्यस्थंप्रहरद्वयम् । तत्रस्नानंनकुर्वीत काम्यनैमित्तिकादृते ॥ स्मृत्युक्तमहानिशासार्द्धप्रहरोपरिप्रहरद्वयमितिरघुनन्दन: । देवलोक्तामहानिशारात्रिमध्यमदण्डद्वयात्मिकासाहितीयप्रहरशेषदण्डतृतीयप्रहरप्रथमदण्डरूपा ॥

महानीच: । पुं॰ रजके । अतिशयहीनवर्णे ।

महानील: । पुं॰ भृङ्गराजे । नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते॰ मणिविशेषे ॥ सिंहलस्याकरोद्भूतामहानीलास्तुतेस्मृता:द्रव्यगस्त्योक्त: । तल्लक्षणं यथा । यस्तुवर्णस्यभूयस्त्वात् क्षीरेशतगुणेस्थित: । नीलतांतनुयात्सर्वंमहानील: सउच्यते ॥ इतिगारुडे॰ ७२ अध्याय: ॥

महानीला । स्त्री॰ महाजम्बाम् ॥

महानीली । स्त्री॰ नीलापराजितायाम् ॥ बृहन्नील्याम् । श्रीफलिकायाम् । केशाह्वायाम् ।

महानुभाव: । पुं॰ श्रीहरौ ॥ महाशये । सुकृतिनि । महामाहात्म्ये ॥ महान्श्रुताध्ययनतपआचारादिनिबन्धनोऽनुभाव: प्रभावोयस्यस: ।

महान्तक: । पुं॰ महेन्द्राचलपीठस्थेशिवे । स्त्री॰ देवीविशेषे ॥ महेन्द्रेचमहान्तका ॥

महापक्ष: । पुं॰ बहुपुत्रादिपरिजने ॥

महापञ्चमूलम् । न॰ बृहत्पञ्चमूले । तद्यथा । बिल्वोग्निमन्थ: श्योनाक: काश्मर्य: पाटलातथा । सर्वैस्तुमिलितैरेतै: स्यान्महापञ्चमूलकम् ॥

महापञ्चविषम् । न॰ बृहद्विषपञ्चके ॥ तद्यथा । शृङ्गीचकालकूटश्चमुस्तकोवत्सनाभक: । शङ्खकर्णीतियोगोयंमहापञ्चविषाभिध: ।

महापञ्चाङ्गुल: । पुं॰ स्थूलैरण्डे ।

महापत्र: । पुं॰ शाकवृक्षे ॥ मानके । मानकचू॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ कन्दे ॥ त्रि॰ बृहत्पत्रयुक्ते ॥ महान्तिपत्राणियस्यस: ॥

महापत्रा । स्त्री॰ महाजम्बाम् ।

महापथ: । पुं॰ प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे ॥ विस्तीर्णपथि ॥ श्मशाने ॥ महतांपन्था: ॰ अ: ॥

महापथगम: । पुं॰ मरणे ॥

महापद्म: । पुं॰ अष्टनागान्तर्गतनागविशेषे । अतिशुक्ले । दशबिन्दुकमस्तके ॥ कुबेरस्यनवनिध्यन्तर्गतनिधिविशेषे ॥ लक्षकोटिसङ्ख्यायाम् । १०००००००००००० ॥ न॰ सितपद्मे ।

महापातकम् । न॰ ब्रह्महत्यादिषु ॥

यथा । ब्रह्महत्यासुरापानंस्तेयंगुर्व्वङ्गनागमः । महान्तिपातकान्याहुस्तत्संसर्गश्चापितैः सह ॥ महापातकजंचिह्नं सप्तजन्मसुजायते । बाधतेव्याधिरूपेणतस्यकृच्छ्रादिभिः शमः ॥ महच्चतत्पातकञ्च ॥

महापातकी । स्त्री॰ ब्रह्महत्याद्यन्यतमपातकयस्ते ॥ वीरहननाद्यन्यतममहापातकयस्ते ॥ यथा । वीरघातीतथापायीवीराणांस्त्रीगमस्तथा । स्तेयीमहापातकिनस्तत्संसर्गीचपञ्चमः ॥ सचपतितः । यथा । महापातकिनोयेचपतितास्तेप्रकीर्त्तिताः । पतितानांनदाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः । नचाश्रुपातः पिण्डोवाकार्यंश्राद्धादिकंक्वचित् ॥ एतानिपतितानान्तुयः करोतिविमोहितः । तप्तकृच्छ्रद्वयेनैवतस्यशुद्धिर्नैचान्यथा ॥ इतिशुद्धितत्त्वधृतंविष्णुपुराणवचनम् ॥ महापातकिनोजीवतएवप्रेतस्योदकक्रियावच्चयमाचरेत्यासपिण्डैः समानोदकैश्चग्रामाद्बहिर्गत्वाचाण्डालस्त्विग्गुरुसन्निधानेरिक्तायांनवम्यांतिथौदिनान्तेकर्त्तव्यत्याहमनुः ॥ पतितस्योदकंकार्यंसपिण्डैर्बान्धवैर्बहिः । निन्दितेहनिसायाह्नेज्ञात्यृत्विग्गुरुसन्निधौ । दासीघटमपांपूर्णंपर्यस्येत्प्रेतवत्पदा ॥ अहोरात्रमुपासीरन्नशौचंबांधवैः सह ॥ निवर्त्तेरंश्चतस्मात्सम्भाषणसहासने । दायाद्यस्यप्रदानस्ययात्राचैवहिलौकिकी ॥ ज्येष्ठताचनिवर्त्तेतज्येष्ठावाप्यञ्चयद्धनम् । ज्येष्ठांशंप्राप्नुयाच्चास्ययवीयान्गुणतोधिकः ॥ प्रायश्चित्तेतुचरितेपूर्णंकुम्भमपांनवम् । तेनैवसार्द्धंप्रास्येयुः स्नात्वापुण्येजलाशये ॥ सत्वप्सुतंघटंप्रास्यप्रविश्यभवनंस्वकम् । सर्वाणिज्ञातिकार्याणियथापूर्वंसमाचरेत् ॥ एवमेवविधिंकुर्य्याद्योषित्सुपतितास्वपि । वस्त्रान्नपानंदेयन्तुवसेयुश्चगृहान्तिके ॥ महापातकमस्त्यस्यामिन्वा । इनिः ॥ पारिभाषिकमहापातकीयथा ॥ कृतप्राणप्रतिष्ठास्वनीचैर्यांप्रतिमांद्विजः । दुर्गांनप्रणमेद्यस्तुसमहापातकीस्मृतः ॥ अपिच । पितरंमातरंभार्य्यांगुरुपत्नींगुरुंपरम् । योनपुष्णातिकापट्यात्समहापातकीभवेत् ब्र॰ वै॰ पु॰ ॥

महापापम् । न॰ महापातकं । अत्युत्कटपापे ॥

महापाप्मा । पुं॰ अत्युग्रे । कामे । महतः पापस्यहेतुत्वात् ।

महापारेवतम् । न॰ द्वत्पारेवते । द्वीपखर्जूरे ॥

महापाशः । पुं॰ यमदूतविशेषे । इत्याभिः ॥

महापासकः । पुं॰ गोमिनि । चेलु
के । बुद्धभिक्षुशिष्ये ॥
महापिण्डीतकः । पुं॰ कृष्णवर्णमद
नद्रुमे । वाराहे ॥
महापिण्डीतरुः । पुं॰ वृक्षविशेषे
। श्वेतपिण्डीतके । शस्त्रकोषतरौ
। शरे । पिण्डीतरौ । पेण्डिरा॰
इ॰ भा॰ ॥
महापीठम् । न॰ एकपञ्चाशत्पीठे ॥
महापीलुः । पुं॰ वृहत्पीलुवृक्षे ।
महाफले । मधुपीलौ ॥
महापुराणम् । न॰ एकादशलक्षणयुक्ते
व्यासप्रणीतेऽष्टादशसङ्ख्यकपुरा
णविशेषे ॥ तल्लक्षणं यथा । सृष्टि
श्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपाल
नम् । कर्मणांवासनावार्त्तामनूना
ञ्चक्रमेणच । वर्णनंप्रलयानाञ्चमो
क्षस्यचनिरूपणम् । उत्कीर्त्तनंहरे
रेवदेवानाञ्चपृथक्पृथक् ॥ दशा
धिकंलक्षणञ्चमहतांपरिकीर्त्तितम्
॥ इतिब्रह्मवैवर्त्ते कृष्णजन्मखण्डे
१३२ अध्यायः ॥
महापुरुषः । पुं॰ नारायणे । श्रेष्ठ
नरे ॥ लक्षणं वाराह्या ६७ अ॰ ॥
ब्रह्मात्माभेदज्ञानिनि॰ जीवन्मुक्ते
। महांश्चासौपुरुषश्च । सन्महदिति
समासः । आन्महतइत्यात्वम् ॥
महापुरुषदन्ता । स्त्री॰ शतमूल्याम् ॥
महापुरुषदन्तिका । स्त्री॰ महाशता
वर्य्याम् ॥
महापुष्पा । स्त्री॰ अपराजितायाम् ॥
महापृष्ठः । पुं॰ उष्ट्रे त्रि॰ वृहत्पृष्ठे ॥
महापौरुषिकः । पुं॰ वैकुण्ठनाथा
नुचरे ॥
महाप्रकृतिः । स्त्री॰ दुर्गायाम् ॥
महाप्रपञ्चः । पुं॰ स्थूलसूक्ष्मकारण
प्रपञ्चानांसमष्टौ ॥ यथाऽवान्तरव
नानांसमष्टिरेकंमहद्वनम्॰ यथाऽवा
न्तरजलाशयानांसमष्टिरेकोमहान्
जलाशयोभवति॰ तद्वत्स्थूलसूक्ष्म
कारणशरीरप्रपञ्चानामपिसमष्टिरे
कोमहान्प्रपञ्चोभवतीति ॥
महाप्रभः । त्रि॰ अतिशयदीप्तियु
क्ते ॥
महाप्रभावः । त्रि॰ अतिशयतेजः
शक्तिविशिष्टे ॥
महाप्रभुः । पुं॰ जगन्नाथे ॥
महाप्रलयः । पुं॰ सर्वसंहारे । एक
कालिकसमस्तजन्यपदार्थनाशे ॥
महांश्चासौप्रलयश्च ॥ न्यायमते ज
न्यभावानधिकरणकालोमहाप्रल
यः॰ सचचरमध्वंसरूपः ॥
महाप्रसादः । पुं॰ विष्णुनैवेद्यादौ
॥ यथा । पादोदकञ्चनिर्माल्यंनै
वेद्यञ्चविशेषतः । महाप्रसादइत्यु
क्त्वाग्राह्यंविष्णोःप्रयत्नतः ॥ ब्राह्मे
णब्रह्मनैवेद्यब्रह्मणेपितवस्तुनि । त
न्माहात्म्यंमहानिर्वाणतन्त्रेसम्यक्

निरूपितम् ।
महाप्रस्थानम् । न॰ शास्त्रीयदेहत्या गविशेषे ॥ महत्॰आवृत्तिशून्यंप्र स्थानम्॰सर्पव्याघ्रिकसिंहव्याघ्रादि विषमभूम्याद्यपरिहारेणगमनंयाव च्छरीरपातंतन्महाप्रस्थानम्॰इत्यु च्यते ॥
महाप्राण : । पुं॰ द्रोणकाके ॥
महाप्रेत : । पुं॰ ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशि व: । एतेपञ्चमहाप्रेताभूताधिपतयो मता: ॥ चत्वारोमञ्चचरणा:पञ्चम: प्रच्छद:पट: । सच्चित्प्रकाशरूपेणशि वेनाभिन्नविग्रहा: ॥ तत्रासनेसमा सीनानिर्भरानन्दरूपिणीति ॥
महाफल : । पुं॰ मालूरे । बिल्वे ॥ त्रि॰ उत्कृष्टफले ॥ न॰ बृहत्फले ॥
महाफला । स्त्री॰ इन्द्रवारुण्याम् ॥ राजजम्ब्वाम् ॥ तुम्ब्याम् ॥ महा कोशातक्याम् ॥ मधुबीजपुरे ॥
महाफेना । स्त्री॰ अब्धिफेने । हिण्डी रे ॥
महाबल : । पुं॰ वायौ ॥ बुद्धे ॥ न॰ सीसके ॥ त्रि॰ बलोत्कटे । बलीय सि ॥ महासामर्थ्ये ॥ महत्प्रकृष्टं बलमस्य ॥
महाबला । स्त्री॰ अतिबलायाम् । पी तपुष्पाम् । पीतबाम्यालके ॥
महाबोधि : । पुं॰ बुद्धे ॥

महाब्राह्मण : । पुं॰ निन्दितब्राह्मणे । कश्या॰ अचारज॰ इ॰ भा॰ ॥
महाभद्रा । स्त्री॰ काश्मर्याम् ॥ गङ्गा याम् ॥
महाभट : । पुं॰ अतिशययोद्धरि ॥
महाभाग : । त्रि॰ अतिधन्ये ॥ दयाद्य द्गुणयोगोमहाभागता॰ तद्विशिष्टे ॥ महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमु दायोयस्यवा ॥
महाभागा । स्त्री॰ महालयतीर्थस्थायां देव्याम् ॥
महाभारतम् । न॰ व्यासप्रणीतेतिहास शास्त्रे ॥ तन्नामकारणं यथा । एक तश्चतुरोवेदाभारतश्चैतदेकत: । पुराकिलसुरै: सर्वै: समस्यतुलया धृतम् ॥ चतुर्भ्य: सरहस्येभ्योदेवे भ्योभ्यधिकंयदा । तदाप्रभृतिलोके स्मिन्महाभारतमुच्यते ॥ महत्वा द्भारतत्वाच्चमहाभारतमुच्यते ॥
महाभाष्यम् । न॰ पातञ्जलव्याकरण भाष्ये ॥
महाभिलाष : । त्रि॰ महेच्छे ॥ महा नभिलाषोस्य ॥
महाभिष: । पुं॰ राजर्षिविशेषे । प्रा तीपे । शन्तनौ ॥ यथा । महाभि षोनृपोजात : प्रतीपस्यसुतस्तदा । शन्तनुर्नामराजर्षिर्धर्मात्मासत्यसङ्ग रइति ॥

महाभीता । स्त्री० लज्जालुवृक्षे ॥ त्रि० अतिशयभययुक्ते ॥

महाभीमः । पुं० शान्तनुनृपे ॥ भृङ्गिनामकशिवद्वारपाले ॥ त्रि० अतिशयभयानके ॥

महाभीरुः । पुं० कीटविशेषे । गोपालिका० इ० गौ० दे० भा० प्र० ॥ ग्वाली० इ० दे० भा० ॥ अतिशय भयशीले ॥

महाभीष्मः । पुं० शान्तनुनृपे ॥

महाभूतम् । न० व्योमादिपञ्चसु । भूम्यादिपंचसु ॥ महाभूतानिपंचैव वानिलाग्न्यम्बुभूमयः ॥

महाभृङ्गः । पुं० नीलभृङ्गराजे ॥

महाभैरवः । पुं० शरभरूपिणिहरे ॥

महाभोगः । त्रि० नारायणे । अति सुखिनि ॥ महान्भोगः सुखरूपोऽस्य ॥

महाभोगा । स्त्री० दुर्गायाम् । महार्थसाधिनीदेवीमहाभोगाततःस्मृता ॥

महामण्डूकः । पुं० पीतमण्डूके ॥

महामतिः । त्रि० अतिशयबुद्धिविशिष्टे ॥

महामदः । पुं० मत्तगजे ॥ त्रि० अतिशयहर्षयुक्ते ॥

महामनाः । त्रि० सदन्तःकरणे । प्रकृष्टे । महेच्छे । उदारे । महाशये । अक्षुद्रचित्ते । सर्वश्रेष्ठोऽहमितिमन्यमाने ॥ महद्गम्भीरमन्यैरसममानंमन्यमानंमनोयस्यसः ॥ परमेश्वरे ॥ सृष्टिस्थित्यन्तकर्माणिजगतांमनसैवकरोतीतिमहामनाः ॥ मनसैवजगत्सृष्टिंसंहारञ्चकरोतियइतिविष्णुपुराणम् ॥ मनसैव० सङ्कल्पमात्रेणैव ॥

महामाघः । पुं० योगविशेषे ॥ माघीमघसंयुक्तामघायांचगुरुर्यदा । महामाघस्तदाप्रोक्तोव्रतोद्वाहादि वर्ज्जयेत् ॥

महामात्रः । पुं० प्रधाने । अमात्ये । सेनान्यादौ ॥ समृद्धे । हस्तिपकाधिपे । हस्तिशिक्षाजीविनि ॥ महतीमात्रापरिच्छेदोऽस्य ॥

महामात्री । स्त्री० आचार्यपत्न्याम् ॥ महामात्रयोषायाम् ॥

महामानसी । स्त्री० जिनानांविद्यादेवीभेदे ॥

महामायः । पुं० हरौ । मायाविनामपिमायाकारित्वात् । महतीप्रकृष्टामायास्य । महामायात्वंचमायाविनामपिमयशम्बरप्रभृतीनांविविधप्रपंचविभ्रमकारिमायाप्रयोक्तृत्वात् ॥

महामाया । स्त्री० दुर्गायाम् ॥ ईश्वरशक्ताम् ॥ विसदृशप्रतीतिसाधनंमाया० तस्यायमहत्त्वंसर्वविषयत्वमितिव्याख्यानात् ॥ तस्याः स्वरूपंयथा । कालिकापुराणे । गर्भान्ज्ञानसम्पन्नंप्रेरितंसूतिमारुतैः

। उत्पन्नं ज्ञानरहितंकुरुतेयामिरन्तरम् । पूर्वातिपूर्वसम्बन्धसंस्कारेण-नियोज्यच । आहारादीततोमोह-ममत्वं ज्ञानसंशयम् । क्रोधोपरोधलोभेषुक्षिप्त्वाक्षिप्त्वापुनः पुनः । पश्चात्कामेनसंयोज्यचिन्तायुक्तमहर्निशम् । आमोदयुक्तं व्यसनासक्तं जन्तुं करोतिया । महामायेतिसाप्रोक्तातिमसाजगदीश्वरी ॥ इति ।

महामायी । पुं० ईश्वरे ॥

महामायी । स्त्री० दुर्गायाम् ।

महामारी । स्त्री० महाकाल्याम् ॥ भामयेषभूतायांमहाजनक्षयकर्यांदेवतायाम् । संहारशक्तौ ॥ महतोमारयतीतितथा । महतीचासौमारीचतिवा ॥ व्याप्तंतयैतत्सकलंब्रह्माण्डं मनुजेश्वर । महाकाल्यामहाकालेमहामारीस्वरूपया ॥ सैवकालेमहामारीसैवसृष्टिर्भवत्यजा ॥ स्थितिंकरोतिभूतानांसैवकालेसनातनी-तिमार्कण्डेयपुराणम् ॥ अतिशय-मारके ॥

महामार्ग : । पुं० राजमार्गे ।

महामालिनी । स्त्री० नाराचाभिधेवृत्तविशेषे ॥ यदिहनयुगलंततोवेदरेफैर्महामालिनीतिलक्षणम् ॥

महामाष : । पुं० राजमाषे चौरा० लोबिया० इ० भा० ॥

महामुख : । पुं० कुम्भीरे न० बृहन्मुखे ॥ त्रि० तद्वति ॥

महामुंडी । स्त्री० महाश्रावणिका-याम् ॥

महामुनि : । पुं० नारायणे । अग-स्त्ये ॥ बुद्धे काले । कृपाचार्ये ॥ व्यासे ॥ महांश्चासौमुनिश्च । सन्महदितिसमासः । आन्महतइत्यात्वम् ॥ ब्रह्मविदि ॥ तुम्बुरुवृक्षे ॥ न० कुस्तुम्बुरुणि । धन्याके ॥

महामूर्धा पुं० शिवे ॥ त्रि० बृहन्मस्तकयुक्ते ॥

महामूल : । पुं० राजपलाण्डौ ॥ त्रि० लिङ्गिष्टे ॥

महामूल्य : । पुं० पद्मरागे ॥ न० महार्घे ॥ त्रि० तद्वति ।

महामूषिक : । पुं० बृहद्दुंदुरौ । महाखौ ॥

महामृग : । पुं० हस्तिनि ॥ शरभे ॥

महामृत्युञ्जय : । पुं० मृत्योर्मृत्युकरे शिवमन्त्रविशेषे ॥ नित्यमष्टशतं जपत्वामृत्युंमृत्युपथं नयेत् ॥

महामेघ : । पुं० अतिशयमेघे ।

महामेद : । पुं० अष्टवर्गाङ्गौषधे । पुरोद्भवे । बृहन्मेदे ॥

महामेदा । स्त्री० अष्टवर्गाङ्गौषधविशेषे । वसुच्छिद्रायाम् । जीवन्याम् । पांशुरागिण्याम् ॥ महामेदाभिधः कन्दोमोरङ्गादौप्रजायते । शुक्लार्द्रकनिभ :कन्दोलताजात:सुपाण्डुर: ।

महामेदाभिधः प्रोक्तोग्रन्थिभाजप्र
काशकः । मेदायुगंगुरुस्वादुवृष्यं
स्तन्यकफापहम् । हृणं शीतलं
पित्तरक्तवातज्वरप्रणुत् ॥ तस्याः
लाभे यस्याः स्थानेऽश्वगन्धावरीदेया॥
महामैत्रः। पुं० बुद्धभेदे ॥ * ॥
महामोहः। पुं० भोगेच्छारूपाज्ञाने
॥ महामोहस्तुविज्ञेयोग्राम्यभोगसु
खैषणा ॥ रागे । विषयविशेषे
सदृशविधः। शब्दादिषु पञ्चसु
दिव्यादिव्यतयादशविधेषु विषयेषु
रञ्जनीयेषु रागः • आसक्तिर्महा
मोहः • सचदशविधविषयत्वा
द्दशविधः ॥
महामोही पुं० शिवप्रिये धत्तूरे
॥ त्रि० महामोहविशिष्टे ॥
महाम्बुजः। पुं० नरकान्तरे ॥
महाम्लम्। न० तिन्तिडीके। वृक्षा
म्ले ॥
महायक्षः। पुं० हर्म्यदुपासकविशेषे ॥
महायज्ञः। पुं० अध्यापनादिपंचसु
॥ पाठोहोमश्चातिथीनांसपर्यातर्प
णंबलिः। एतेपञ्चमहायज्ञाब्रह्म
यज्ञादिनामकाः ॥ अध्यापनंब्रह्म
यज्ञः पितृयज्ञस्तुतर्पणम् । होमो
दैवोबलिर्भौतोनृयज्ञोऽतिथिपूज
नम् ॥ अहुतञ्चहुतञ्चैवतथाप्रहुत
मेवच । ब्राह्मंहुतंप्राशितञ्चप
ञ्चयज्ञान्प्रचक्षते ॥ जपोऽहुतो
हुतोहोमः प्रहुतोभौतिकोबलिः
। ब्राह्मंहुतंद्विजाग्र्यार्चाप्राशितंपि
तृतर्पणम् ॥ पञ्चैतान्योमहायज्ञा
न्नहापयतिशक्तितः। सगृहेपिव
सन्नित्यंसूनादोषैर्नलिप्यते ॥ दे
वताऽतिथिभृत्यानांपितृणामात्म
नश्चयः । ननिर्वपतिपञ्चानामु
च्छ्वसन्नसजीवति ॥ अपिच । एते
पञ्चमहायज्ञाब्रह्मणानिर्मितापुरा
। ब्राह्मणानांहितार्थायदत्तरेषांच
तत्कृताः ॥ इतरेषांचवर्णानांब्राह्मणैः
कारिताः शुभाः ॥ एवंकृत्वानरो
भुक्त्वाऽऽयदिदीर्घमुत्पश्यति । अन्य
थाऽऽहवोप्यर्तमेकाल्यप्रक्षिपः ॥
सर्वव्यादापभोक्तॄणांमहामांसंतुत
द्भवेत् ॥ कू० वराहपुराणं ॥
महायशाः। पुं० सूतार्हद्विशेषे ॥
न० कल्पभेदे ॥ त्रि० लोकेवेदेच
प्रसिद्धविभवे ॥ अतिशययशोयुक्ते ॥
महायशस्कः। त्रि० अतिशययुक्ते ॥
महायोगी। पुं० चद्रिकूटपीठस्थे
शिवे ॥
महारजतम्। न० स्वर्णे । धत्तूरे ॥
वृहद्रौप्ये ॥ महच्चतद्रजतंच । स
न्महदितिसमासः । आन्महतद्द
स्यात्त्वम् ॥
महारजनम्। न० कुसुम्भे । कसु
भा० कू० भा० ॥ शातकुम्भे ।
स्वर्णे ॥ रज्यतेऽनेन । रञ्जरागे ।

ल्युट्। रजकरजनरञ्जनरजस्सूप सङ्ख्यानान्नलोपः॥ रञ्जेःक्युन् वा॥ महच्चतद्रजनंच। सन्महदिति समासः।

महारण्यम्। न॰ घरण्यान्याम्॥ मह च्चतदरण्यञ्च। सन्महत्परमोत्तमो त्कृष्टाःपूज्यमानैरितिसमासः। घान्महतइत्यात्वम्॥

महारत्नम्। न॰ मुक्तादिनवसु। मु- क्ताफलंहीरकञ्चवैदूर्यंपद्मरागकम्। पुष्परागञ्चगोमेदंनीलंगारुत्मतंत- था॥ प्रवालयुक्तान्युक्तानिमहार- त्नानिवैनव॥

महारथः। पुं॰ रथिकविशेषे। घयु तधन्विभिःसहयोद्धरि। यथा। एकोदशसहस्राणियोधयेद्यस्तुधन्वि नाम्। शस्त्रशास्त्रप्रवीणश्चमहा रथइतिस्मृतः॥ घपिच। घात्मा नंसारथिञ्चाश्वान्रक्षन्युद्ध्येत योनरः। समहारथसंज्ञःस्यादि त्याहुर्नीतिकोविदाः। शिवे॥ वि ष्णौ। महान्महात्मा॰नन्दी॰गरु डोवारथोयस्यसः॥

महारम्भम्। न॰ गडलवणे। सांभ- र॰हू॰भा॰॥

महारसः। पुं॰ खर्जूरे॥ कोशका- रे। इक्षुविशेषे। कोसियार॰हू॰ भा॰॥ कशेरुणि॥ पारदे। रसे न्द्रे॥ न॰काञ्जिके॥

महारसाष्टकम्। न॰ हिङ्गुलाद्यष्ट- सु॥ यथा। दरदंपारदःसस्यकं वै क्रान्तंकान्तमभ्रकम्। माक्षिकंवि मलश्चेतिस्युरेतेष्टौमहारसाः॥

महाराजः। पुं॰ बुद्धभेदे। मञ्जुघो- षे॥ घसपत्नराज्यवति। नृप- श्रेष्ठे॥

महाराजचूतः। पुं॰ उत्तमाम्रे। म न्मथानन्दे॥

महाराजद्रुमः। पुं॰ घारग्वधे

महाराजिकः। पुं॰ गणदेवताविशे- षे॥ सत्त्वसुधन्वसवनाद्योविंश- त्यधिकशतद्वयसङ्ख्यातागीरवा- ञ्छदर्शिताः। महाराजिकनामानो द्विशतेविंशतिस्तथा॥ महतीराजिः पङ्क्तिर्येषामितिविग्रहेशैशादिभा- षेतिकन्॥

महारात्रिः। स्त्री॰ महाष्टम्याम्। घर्द्धरात्रात्परंमुहूर्त्तद्वये॥ ब्रह्म लयोपलक्षितायांमहाप्रलयरात्र्या- म्॥ ब्रह्मणस्तुनिपातेचमहाकल्पो भवेन्नृप। प्रकीर्त्तितामहारात्रिः सापवचपुरातनैरितिब्र॰वै॰पु॰।

महाराष्ट्रः। पुं॰ देशविशेषे॥ विप- श्चकंसमारभ्यमध्यचोज्जयिनीशिवे। मार्जारतीर्थंराजेन्द्रकोलापुरनिवा- सिनी॥ तावद्देशोमहाराष्ट्रःक- र्णाटस्वामिगोचरः। इ॰शक्तिसङ्ग मे ७ पटलः॥ घपिच। नैकतीह

विडानस्तं महाराष्ट्रास्त्रैवतः। जवनः पल्लवः सिन्धुः पारसीकाद यो मताः। इ॰ज्योतिषतत्त्वे कूर्मचक्रं।

महाराष्ट्री। स्त्री॰ जलपिप्पल्याम्॥ भाषाविशेषे। मरेठी॰इ॰भा॰। भाषाप्रभेदे।

महारिष्टः। पुं॰ महानिम्बे। गिरिनिम्बे।

महारुद्रः। पुं॰ महादेवे।

महारूपः। पुं॰ शिवे

महारूपकम्। न॰ नाटके॥

महारोगः। पुं॰ पापरोगे॥ सचाष्टविधोयथा। उन्मादः १। त्वग्दोषः २। राजयक्ष्मा ३। श्वासः ४। मधुमेहः ५। भगन्दरः ६। उदरः ७। अश्मरी ८। इति॥

महारोगी। त्रि॰ महारोगयुक्ते॥

महारौरवः। पुं॰ नरकान्तरे॥ महारौरवसंज्ञन्तु अधोर्द्धं तामसम्पुटम्। धक्ष्यते यद्धि राज्ञा रेणु रुद्धारापनायकः॥ देवद्रव्यापहारी च पच्यते काल मव्ययम्॥ महान्रौद्रो रौरवोऽत्र। शकन्ध्वादित्वात्द्वलोपः। यद्वा। रुरुर्भीरशृङ्गाख्योमृगः॰ महतोरु रौरवम्। अण्॥

महार्घः। पुं॰ वार्त्ताख्यपक्षौ॥ त्रि॰ महामूल्ये॥

महार्णवः। पुं॰ महासमुद्रे॥

महार्थः। पुं॰ परमार्थे॥

महार्द्रः। पुं॰ शब्दविशेषे। महाना इ॰ गौ॰ दे॰ भा॰॥

महार्द्रम्। न॰ चन्दने॥

महार्द्रकम्। न॰ वनार्द्रके॥

महार्बुदम्। न॰ दशार्बुदे। शतकोटि १००००००००० सङ्ख्यायाम्। पद्मे॥

महार्हः। पुं॰ विष्णौ॥ महः पूजामर्हतीति। अर्हइतिसूत्रात्त्वर्हतेः कर्मण्युपपदे च प्रत्ययः॥ न॰ श्वेतचन्दने॥

महालक्ष्मीः। नारायणशक्त्याम्। राधायाम्॥ यन्मायया मोहिता ब्रह्मविष्णुशिवादयः। वेश्यवार्त्तां महालक्ष्मीं परां राधां वदन्तिते॥ यद्वांशा महालक्ष्मीः प्रियानारायणस्य चेति ब्र॰ वै॰ पुराणम्॥

महालयः। पुं॰ विहारे॥ तीर्थमहाभागादेव्याश्चैवे॥ परमात्मनि। पितृणामुत्सवाश्रये कन्यागतापरपक्षे कन्यागत॰ इ॰ भा॰॥

महालसा। स्त्री॰ देवीविशेषे। दक्षिणदेशे॰ महादिशानमितिविख्याते॰ देवीस्थाने।

महालिकटभी। स्त्री॰ श्वेतकिणिही वृक्षे॥

महालोलसरस्वती। स्त्री॰ तारादेव्याः प्रभेदे॥ लोलयावाक्प्रदाचेतितेन

लीलसरस्वती ॥

महालोध्र : । पुं॰ लोध्रे । पटियालो ध॰ हू॰ भा॰ ॥

महालोल : । पुं॰ काके ॥ चि॰ अतिचञ्चले ॥

महालोहम् । न॰ अयस्कान्ते ॥

महावनम् । न॰ महारण्ये ॥ वृन्दावनस्यचतुरशीतिवनान्तर्गतवनविशेषे ॥

महावप : । पुं॰ महासिंहे ॥

महावरा । स्त्री॰ दूर्वायाम् ॥

महावराह : । पुं॰ आदिवराहे ॥ महांश्चासौवराहश्च । महत्त्वञ्चास्यातिविपुलशरीरधारणात्पृथिव्युद्धरणाय ॥

महावरोह : । पुं॰ प्लक्षवृक्षे ॥

महावलि : । पुं॰ नरबली ॥

महावल्ली । स्त्री॰ माधवीलतायाम् ।

महावस : । पुं॰ शिशुमारे ॥

महावाक्यम् । न॰ परमार्थबोधकवैदिकोपदेशवाक्यविशेषे । सङ्ख्यापरपर्यायेप्रतिष्ठादावुत्सर्गवाक्ये ॥ योग्यताकांक्षासत्तियुक्तवाक्यसमूहे ॥

महावारुणी । स्त्री॰ तिथिविशेषे ॥ सायथा । शनिवारसमायुक्तासामहावारुणीस्मृता । गङ्गायांयदिलभ्येतकोटिसूर्यग्रहैः समा ॥ सा॰ वारुणीत्यर्थ : ॥ महामहावारुणी तु । यथा । शुभयोगसमायुक्ताशनौ शतभिषायदि । महामहेतिविख्या ताभिःकोटिकुलमुद्धरेत् ॥

महाबाहु : । पुं॰ स्कन्दे ॥ श्रीरामे ॥ महान्तौबाहूयस्य । अस्यबाहोर्महत्त्वञ्चोक्तं युद्धकांडे । पिशाचानुद्रानवानृयक्षामृपृथिव्यांयेचराक्षसा : अङ्गुल्यग्रेणतान्हन्यामिच्छन्हरिगणेश्वरेति ॥

महाविद्या । स्त्री॰ देवताविशेषे ॥ यथा । कालीतारामहाविद्याषोडशी भुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावतीतथा । वगलासिद्धविद्याचमातङ्गीकमलात्मिका । एता दशमहाविद्या : सिद्धविद्या : प्रकीर्त्तिता : ॥ तासांदशावतारत्वं यथा । प्रकृतिर्विष्णुरूपाचपुंरूपश्च महेश्वर : । एवंप्रकृतिभेदेनभेदास्तुप्रकृतेर्दश । कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । बगलाकूर्ममूर्तिस्यान्मीनोधूमावतीभवेत् ॥ छिन्नमस्तानृसिंह : स्याद्वराहश्चैवभैरवी । सुन्दरीयामदग्न्य : स्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्याद्दुर्गास्यात्कल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयंभगवान्कृष्ण : कालीरूपोभवेत् ॥

महाविराट् । पुं॰ महाविष्णौ ॥

महाविलम् । न॰ नभसि हृच्छिद्रे ॥

महाविष : । पुं॰ द्विमुखसर्पे । काल

सर्पे ॥
महाविषम् । न॰ मेषसङ्क्रान्तौ ॥ मसूरं निम्बपात्राभ्यांयोऽत्तिमेषग तेरवौ । अपिरोषान्वितस्तस्यतक्षकः किंकरिष्यति ॥
महाविष्णुः । पुं॰ महाविराजि ॥
महावीचिः । पुं॰ नरकविशेषे । महावीचिय बमहाकल्लोलैरतुमीय ते ॥
महावीध्रम् । न॰ विटपे । मुष्कव ङ्क्षणयोरन्तरे ॥
महावीरः । पुं॰ गरुडे ॥ शूरे ॥ सिंहे । मखानले । यज्ञाग्नौ ॥ वज्रे ॥ श्वेततुरङ्गे । अन्तिमजि ने ॥ कोकिले ॥ लक्ष्मणे । हनुम ति ॥ एकवीरवृक्षे ॥ सङ्ग्रामविह गे । जराटके । कामदेवे । मारे ।
महावीरा । स्त्री॰ क्षीरकाकोल्याम् ॥
महावीर्यः । पुं॰ ब्रह्मणि महदु त्पत्तिकारधर्मविद्यालक्षणं वीर्यम स्य । बुद्धभेदे । वाराहीकन्दे ॥ त्रि॰ महाप्रभावे । अतिशयबलयुक्ते ॥
महावीर्या । स्त्री॰ संज्ञायाम् । सूर्य पत्न्याम् । वनकार्पास्याम् । महा शतावर्य्याम् ॥
महावृक्षः । पुं॰ स्नुहीद्रुमे ॥
महावृत्ती । स्त्री॰ वार्ताक्याम् ॥
महावेगः । त्रि॰ अधिकवेगवति ॥
महाव्याधिः । पुं॰ कुष्ठादिमहारोगे॥

महाव्रणम् । न॰ दुष्टव्रणे ॥
महाव्रतम् । न॰ द्वादशवार्षिकव्रते॥ यथा । ते नवधकालादूर्ध्वं विंशत्य ऽधिकशतस्ययावदब्दहिष्टं तावत्प रिमाणमहाव्रतानुरूपाधिनवोदात व्याः शरत्कालिकदुर्गापूजनै । य- था । महाव्रतं महापुण्यं शङ्कराद्यै रनुष्ठितम् । कर्त्तव्यं सुरराजेन्द्रदे वीभक्तिसमन्वितैः ॥ अरुणोदय कालिकमाघस्नाने ॥ अत्तिषयोग शास्त्रेऽवविशेषः । सयथा । अहिं सासत्यास्तेयब्रह्मचर्यो परिग्रहाय माः ॥ ३० ॥ एते जातिदेशकाल समयाऽनवच्छिन्नाः सार्वभौमाम हाव्रतम् । ३१ । येचाहिंसाद्याः पञ्चयमाउक्तास्तएवजात्याद्यनवच्छे देन॰दृढभूमयोमहाव्रतशब्दवाच्याः तत्राहिंसाजात्यवच्छिन्नायथा॰मृग योमृगातिरिक्तान्नहनिष्यामीति ॰ सैवकालावच्छिन्नायथा॰ नचतु र्दश्यांनपुण्येऽहनीतिसैवप्रयोजन विशेषरूपसमयावच्छिन्नायथा॰क्ष- त्रियस्यदेवब्राह्मणप्रयोजनव्यतिरे केणनहनिष्यामीति॰युद्धंविनानह निष्यामीतिच । एवंविवाहादिप्र योजनव्यतिरेकेणानृतं नवदिष्या मीति । एवमापत्कालव्यतिरेकेण सुवर्णाद्व्यतिरिक्तः स्तेयं नकरि ष्यामीति । एवमृतुकालव्यतिरिक्त

कामेपत्नींनगमिष्यामीति । एवं गुर्वादिप्रयोजनमन्तरे णनपरिग्रहो ष्यामीति॰यथायोग्यमवच्छेदोद्रष्ट व्य : । एतादृगवच्छेदोपरिहारे ण यदासर्वजातिसर्वदेश सर्व्वकाल सर्वप्रयोजनेषुभवा : सार्वभौमा अहिंसादयोभवन्तिमहताप्रयत्नेन परिपाल्यमानत्वात्॰तदातेमहाव्र तशब्देनोच्यंते । एवंकाष्ठमौना दिव्रतमपिद्रष्टव्यम् । एतादृशव्रत दार्ढ्यंच॰कामक्रोधलोभमोहानांच तुर्णामपिनरकद्वारभूतानांनिवृत्तिः। तत्राहिंसमयाक्षमयाचक्रोधस्य॰ब्रह्म- चर्य्येणवस्तुविचारेणचकामस्य॰अ- स्तेयापरिग्रहरूपेणसन्तोषेणलोभ- स्यसत्येनयथार्थज्ञानरूपेणविवेकि- नमोहस्य॰तन्मूलानाञ्चसर्वेषांनिवृ त्तिरितिद्रष्टव्यम् । इतराणिचफला निसकामानांयोगशास्त्रे कथितानि॥

महाव्रती । पुं॰ शिवे ॥ उरस्कटे ॥ त्रि॰महाव्रतयुक्ते ॥

महाशक्ति : । पुं॰ कार्त्तिकेये ॥ हा- रौ ॥ महतीशक्ति : सामर्थ्यमस्य॥ अतिशयपराक्रमे ॥ स्त्री॰मायाशब- लब्रह्मरूपिण्याम् । निर्गुणायाम् ॥ त्रि॰ तद्युक्ते ॥

महाशङ्ख : । पुं॰ नरास्थनि । कर्ण नेत्रयोर्मध्यगतास्थ्नि ॥ कर्णनेत्रान्त- रालास्थिमहाशङ्ख : प्रकीर्त्ति- त : ॥ दशनिखर्वे १०००००००००००० । निधिप्रभे दे ॥ अलिके । ललाटे ॥ बृहच्छङ्- खे ॥ यात्रायोगान्तरे ॥ यथा । स्वो च्चस्थेलाभगेशुक्रे त्रिषष्टे देवपूजिते । महाशङ्खाह्वयोयोग : प्रतिप- द्यापमानद : ॥

महाशठ : । पुं॰ राजधत्तूरे ॥ त्रि॰अ तिधूर्त्ते ।

महाशणपुष्पिका । स्त्री॰ बृहच्छणपु- ष्प्याम् । वृत्तपर्ण्याम् । श्वेतपुष्पा याम् ॥

महाशता । स्त्री॰ महाशतावर्याम् ॥

महाशतावरी । स्त्री॰ सहस्रवीर्याया- म् । सुरसायाम् । शतवीर्यायाम् ॥ महाशतावरीमेध्याहृद्याबृष्यारसाय नी । शीतवीर्यानिहन्त्यर्शोग्रहणी- नयनामयान् ॥

महाशन : । पुं॰ विष्णौ ॥ कल्पा- न्ते सर्वग्रसनात्महत्अशनंसंहार्य्य- मस्य ॥ महाभैरवे ॥ कामे ॥ मह- दशनंविषयजातंयस्य स : ॥ अघा- सुरे ॥ त्रि॰अतिभक्षणशीले ।

महाशफर : । पुं॰ मत्स्यसख्ये ॥ महाशफरसंज्ञस्तुतिक्त : पित्तकफा पह : । शिशिरोमधुरोरुच्योवात- साधारण : स्मृत : ॥

महाशय : । त्रि॰ सदिच्छे ॥ महान् आशयोयस्य ॥ पुं॰समुद्रे ॥

महाशय्या । स्त्री० राजतल्पे ॥ वृह-च्छय्यायाम् ॥

महाशरः । पुं० स्थूलशरे ॥

महाशल्कः । पुं० चिङ्गटमत्स्ये ॥

महाशाकः पुं० शाक[illegible] ॥

महाशाखा, स्त्री० नागबलायाम् ॥

महाशालः । पुं० महागृहस्थे । विस्तीर्णाभिः शालाभिर्युते । सम्पन्ने ॥ महतीविस्तीर्णाशाला०गृहंयस्यसः॥

महाशालिः । पुं० स्थूलशालौ । सुगन्धिके ॥ महान्श्रेष्ठः शालिः ॥

महाशिवः । पुं० महादेवे ॥

महाशीता । स्त्री० शतमूल्याम् ॥

महाशुक्तिः । पुं० मुक्तामातरि ॥

महाशुक्ला । स्त्री० सरस्वत्याम् ॥ त्रि० अतिशुक्लवर्णयुक्ते ॥

महाशुभ्रः । त्रि० अतिशुभ्रवर्णयुक्ते ॥ न०रजते ॥

महाशूद्रः पुं० आभीरे ॥

महाशूद्रा । स्त्री० महत्यांशूद्रायाम् ॥ महतीशूद्रेतिविग्रहः ॥

महाशूद्री । स्त्री० आभीर्याम् ॥ महाशूद्रस्यस्त्री०जातीयावा । पुं०योगादिति०जातेरितिवाङीप् ॥

महाशौण्डी । स्त्री० श्वेतकिणिहीवृक्षे ॥

महाशीषिरः । पुं० दंतरोगविशेषे ॥ दन्तास्थलन्तिवेष्टभ्यस्तालुचाप्यवदीर्यते । दन्तमांसानिपच्यंतेमुखस्यप-तुद्यते ॥ यस्मिन्ससर्वजोव्याधिर्महाशीषिरसंज्ञित: ॥

महाश्मशानम् । न० आनन्दवने । काश्याम् ॥ महांत्यपिचभूतानिप्रलयेसमुपस्थिते । शेरतेऽत्रशवाभूत्वाश्मशानन्तुततोभवेत् ॥ वाराणसीतिविख्याताशुद्रावासइतिद्विजः । महाश्मशानमित्येवंप्रोक्तमानन्दकाननम् ॥

महाश्यामा । स्त्री० शिंशपावृक्षे ॥ श्यामलताम् ॥

महाश्रमः । पुं० तीर्थविशेषे ॥

महाश्रमणः । पुं० बुद्धभेदे । शाक्यमुनौ ॥

महाश्रावणिका । स्त्री० कदम्बपुष्प्याम् । महामुण्डाम् ॥

महाश्रीः । स्त्री० बुद्धशक्त्यन्तरे । तारायाम् ॥

महाश्रोत्रियः । पुं० महत्त्वसतिश्रुताऽध्ययनवृत्तसम्पन्ने ॥ महांश्चासौश्रोत्रियश्च ॥

महाश्वेता । स्त्री० शुक्लभूकूष्माण्डे । कृष्णगन्धिकायाम् ॥ श्वेतभूमिकूष्माण्डे ॥ सरस्वत्याम् ॥ श्वेतापराजितायाम् ॥ सितायाम् ॥ मधुजायाम् ॥ श्वेतकिणिहीवृक्षे ॥ दुर्गायाम् ॥ महतीचासौश्वेताच ॥

महाषष्ठी । स्त्री० दुर्गायाम् ॥

महाष्टमी । स्त्री० आश्विनशुक्लाष्टम्याम्

। शरत्कालोद्भवायातुसैवप्रोक्तामहाष्टमी। महारात्रिरितिख्यातातस्यामभ्यर्चयेत्सुधीः॥ अष्टम्यांरुधिरैर्मांसैर्महामांसैः सुगंधिभिः। पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवाम्। सिन्दूरैः पट्टवासोभिर्नानाविधविलेपनैः। पुष्पैरनेकजातीयैः फलैर्बहुविधैरपि। उपवासंमहाष्टम्यांपुत्रवान्नसमाचरेत्। यथातथैवपूतात्माव्रतीदेवींप्रपूजयेत्॥ पूजयित्वामहाष्टम्यांनवम्यांबलिभिस्तथा। विसर्ज्जयेद्दशम्यान्तुश्रवणेतांवरोत्सवैः तत्रार्हरात्रपूजा यथा। कन्यासंस्थेरवावेषे शुक्लाष्टम्यांप्रपूजयेत्। सोपवासोनिशार्द्धेतुमहाविभवविस्तरैः। पूजांसमारभेद्व्यानन्तवारुणेपिवा। पशुघातश्चकर्त्तव्योगवलावधस्तथेतिदेवीपुराणे वारुणपदेनपूर्वाषाढोच्यतइतिरघुनन्दनः॥ महाष्टम्युपवासं पारयन्तु। अष्टम्यांसमुपोष्यैवनवम्यामपरेऽहनि। मत्स्यमांसोपहारेणदद्यान्नैवेद्यमुत्तमम्॥ तेनैवविधिनान्नन्तुस्वयंभुञ्जीतनान्यथेति॥

महासन्नः। पुं॰ कुवेरे। त्रि॰ अतिनिकटे।

महासमङ्गा। स्त्री॰ हस्तबलायाम्। खिरहिट्याम्। बलायाम्। कगहियाम्॰ कंघी॰ खरैटी॰ इ॰ भा॰॥

महासर्ज्जः। पुं॰ असनवृक्षे॥ पनसे।

महासहः। पुं॰ कुब्जकवृक्षे। त्रि॰ अतिक्षमे॥

महासहा। स्त्री॰ माषपर्ण्याम्। अम्लाने। कठसरैय्या॰ इ॰ भा॰॥ महतीचासौसहाच। सन्महदितिसमासः। आन्महतइत्यात्वम्॥

महासन्तापनम्। न॰ व्रतविशेषे। अथयाज्ञवल्क्यः। कुशोदकञ्चगोक्षीरंदधिमूत्रंशकृद्घृतम्। जग्ध्वापरेह्न्युपवसेत्कृच्छ्रंसान्तपनंचरन्॥ द्वादसाध्यसान्तपनमुक्ताह। पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः। सप्ताहेनैवकृच्छोयंमहासान्तपनंस्मृतम्॥ महासान्तपनंधेनुषट्कदानसमम्।

महासारः। पुं॰ दुष्खदिरे। त्रि॰ युक्तियुक्ते॥

महासाहसम्। न॰ अतिबलात्कारकृतकार्ये। अतिशयदण्डे॥

महासाहसिकः। त्रि॰ अतिसाहसयुक्ते॥ प्रसह्यापहारिणि। महांश्चासौसाहसिकश्च।

महासिंहः। पुं॰ शरभे। पर्वताश्रये। देव्याः सिंहे॥ यथा। तीक्ष्णदंष्ट्रः करालास्यः शटाशोभितकन्धरः।

चतुरङ्घ्रिर्वृषनखोमहासिंह : प्रकीर्त्तितइति ॥

महासुख : । पुं॰ बुद्धे ॥ न॰ क्रीडारत्ने ॥ प्रचुरसुखे ॥ त्रि॰ तद्वति ॥

महासुगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥ त्रि॰ अतिसुगन्धयुक्ते ॥

महासूक्ष्मा । स्त्री॰ वालुकायाम् ॥ त्रि॰ अतिशयसूक्ष्मे ॥

महासेन : । पुं॰ कार्त्तिकेये ॥ महासैन्यपतौ ॥ बौद्धभेदे ॥ महतीसेनाऽस्य ॥

महास्कन्ध : । पुं॰ शरभे ॥ त्रि॰ उन्नतस्कन्धयुक्ते ॥

महास्कन्धा । स्त्री॰ जम्बूवृक्षे ॥

महास्कन्धी । पुं॰ शरभे ॥

महास्थली । स्त्री॰ पृथिव्याम् ॥ श्रेष्ठस्थाने ॥

महास्नायु : । पुं॰ कण्डरायाम् ॥

महास्रग्वी । पुं॰ शिवे ॥

महास्वन : । पुं॰ वाद्यप्रभेदे । महातूर्य्ये ॥ शिवे ॥ महान्ऊर्जित : स्वन : नादोऽस्य । यद्वा । महान् स्वन : श्रुतिलक्षणोनादोऽस्य ॥ सम्भवदितिसमासे॰ आत्वम् । उच्चशब्दे ॥ त्रि॰ तद्वति ॥

महाहनु : । पुं॰ शिवे ॥ हनूमति ॥ त्रि॰ उच्चहनुयुक्ते ॥

महाहवि : । न॰ गोघृते ॥ ब्रह्मणि ॥ महच्चतद्धविश्च॰ ब्रह्माग्नौब्रह्मणिसर्वंजगत्तदात्मतयाहूयतेइतिमहाहवि : । यद्वामहाग्निहवींषिआज्यपुरोडाशपशुसोमादिरूपाण्यस्य॰ इन्द्रादिदेवतारूपस्ययजमानरूपस्यवेतिमहाहवि : ॥

महाहास : । पुं॰ अट्टहासे ॥

महाहिगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥

महाह्रस्वा । स्त्री॰ कपिकच्छ्वाम् । शूकशिम्ब्याम् ॥ त्रि॰ अतिखर्वे ॥

महि । अ॰ महिमनि ॥

महि : । स्त्री॰ भूमौ ॥ मह्यते । मह पूजायाम् । चुरादिरदन्त : । सर्वधातुभ्य इन् ॥

महिका । स्त्री॰ हिमे ॥ मह्यते । मह॰ । क्वुन्शिल्पिसंज्ञयो : ॥

महित : । त्रि॰ पूजिते ॥ मह्यतेस्म ॥ मह॰ । मतिबुद्धिपूजार्थेभ्यश्चेतिक्त : ॥

महितम् । न॰ राज्ये ॥ त्रि॰ पूजनीये ॥ मह्यते । मह॰ । महेरिनण्चेति पक्षेइनन् ॥

महिमा । पुं॰ शिवैश्वर्य्ये । ऐश्वर्यातिशये । भूतिप्रभेदे ॥ महान्भवति॰ येनसमस्तब्रह्माण्डेपिन्समवैति ॥ विभूतिविस्तारे ॥ आत्मन : कर्मनिमित्तवृद्धिचयराहित्ये ॥ महतो भाव : । पृथ्वादिभ्यइमनिच् । उत्कर्षे ॥

महिमभृत् । त्रि॰ ऐश्वर्य्यवति ॥

महिर: । पुं॰ पीथे । मिहिरे । सूर्ये ॥

इतिचिक्काण्डशेष : ॥

महिला । स्त्री० फलिन्याम् । गुन्द्रायाम् । प्रियङ्गौ ॥ स्त्रियाम् । योषिति ॥ रेणुकानामगन्धद्रव्ये ॥ मदमत्तायाम्योषायाम् ॥ महति० मह्यति वा । मह० । सलिकलीति० इलच् । टाप् ॥

महिलाह्वया । स्त्री० श्यामायाम् । प्रियङ्गौ ॥ महिलायाआह्वयोयस्या : ॥

महिष : । पुं० लुलाये । कासरे । यमवाहने । भैंसा० हि० भा० ॥ महिषस्यामिषंस्वादुस्निग्धोष्णंवातनाशनम् । निद्राशुक्रबलस्तन्यतनुदार्ढ्यकरंगुरु ॥ दध्यस्यसृष्टिविण्मूत्रंवातपित्तास्रनाशनम् ॥ महति० मह्यतेवा । मह० । अविमह्योष्टिषच् । यद्वामंहतेमहिषवीटिषच् । आगमशासनस्यानित्यत्वान्ननुम् ॥ अर्हद्ध्वजविशेषे ॥ असुराधिपविशेषे । महिषासुरे ॥ श्मश्रुधारिणिम्ले च्छजातिविशेषे ॥ पुरायंचवियमासीत्सगरेणाश्ववेदाद्यनधिकारोवेशान्यत्वंधर्मनाशश्चकृत: ॥

महिषकन्द : । पुं० महाकन्दविशेषे । शुभाली ॥

महिषघ्नी । स्त्री० दुर्गायाम् ॥

महिषध्वज : । पुं० यमे ॥ अर्हद्विशेषे ॥ महिषोध्वजं यस्यस : ॥

महिषमर्द्दिनी । स्त्री० दुर्गायाम् ॥

महिषवल्ली । स्त्री० लताविशेषे । सोम्यायाम् ॥

महिषवाहन : । पुं० यमे ॥

महिषाक्ष : । पुं० )

महिषाक्ष : । पुं० ) गुग्गुलौ । भृङ्गाञ्जनसमप्रभे ॥

महिषाक्षादि । न० महिषाक्षादिपञ्चाङ्गगणे ॥ यथा । महिषाक्षवचाताल'निर्यास : सर्जकस्तथा । कृष्णागुरु:कदम्बश्चमहिषाक्षादिपञ्चकम् ॥

महिषासुर : । पुं० महासुरविशेषे । रम्भासुरात्मजे ॥

महिषासुरसम्भव : । पुं० भूमिजगुग्गुलौ ॥

महिषासुरहन्त्री । स्त्री० दुर्गायाम् ॥

महिषी । स्त्री० कृताभिषेकायांराज्ञ : पत्न्याम् ॥ मह्यते । मह० । अविमह्योष्टिषच् । टित्त्वान्ङीप् ॥ औषधीभेदे ॥ सैरिभ्याम् । मन्दगमनायाम् । महाक्षीरायाम् । भैंस० हि० भा० ॥

महिषीगोष्ठम् । न० महिषीशालायाम् । भैंसवाडा० हि० भा० ॥ महिषीणांस्थानम् । गोष्ठच् ॥

महिषीदुग्धम् । न० महिषीक्षीरे । सैरिभ्या : सत्त्वे ॥ माहिषंमधुरंगव्यात्स्निग्धंशुक्रकरंगुरु । निद्राकरंमभिष्यन्दिक्षुधाधिक्यकरंहिमम् ॥

महिषीप्रिया। स्त्री॰ तृणविशेषे। शूल्याम्। शूलपत्र्याम्। जलाश्रयायाम्॥
महिष्मान्। पुं॰ देशविशेषे॥ महिषा: सन्त्यस्मिन्। महिषाश्चेति वक्तव्यमिति॰ ड्मतुप्।
मही। स्त्री॰ भूमौ। पृथिव्याम्॥ मह्यते। मह॰। चुरादावदन्त:। यस्मादच्। कृदिकारादिति ङीष्॥ यद्वा। महीयते। महीङ् पूजायाम्॰ कण्ड्वादियगन्त:। क्विप् चेतिक्विप्। अल्लोपयलोपौ। कृदिकारादितिङीष्। तदभावे विसर्गस्त्यप्याहु:॥ मालवदेशविहारिण्यांनद्याम्॥ महीजलन्तुसु स्वादुत्रल्यं पित्तहरं गुरु॥ गवि॥ हिलमोचिकायाम्॥ वर्णवृत्तप्रस्तुकृद्याप्रभेदे॥ यथा। लघुर्गुरु:। महीस्मृता॥ यथा। हरोऽस्तुमे। मनोमुदे॥
महीचित्। पुं॰ नृपे। राजनि॥ महीं॰ चयते॰ ईष्टे। चिनिवासगत्यो:। मह्यांचयतिवा। चिघयैश्वर्ययो:। क्विप्। तुक्॥
महीज:। पुं॰ भौमे। मङ्गलग्रहे॥ न॰ आर्द्रके॥ त्रि॰ भूमिजाते॥
महिदुर्गम् न॰ मृदापाषाणैर्वेष्टकैर्वाविस्ताराद्द्विगुणोच्छ्रायेणद्वादशहस्तायुच्छ्रितैमयुद्धार्थमुपरिभ्रमणयोग्येनसौवर्णगवाक्षादियुक्ते नप्राकारे

पर्वेष्टितेराज्ञांवासस्थाने॥
महीधर:। पुं॰ विष्णौ॥ महीगिरिरूपेणधत्ते। धरति। धृञ्॰। मह्याधर:॥ अच्॥
महीध्र:। पुं॰ शिखरिणि। पर्वते॥ महींधरतिधारयतिवा। धृञ्॰। मूलविभुजादित्वात्क:॥
महीपाल:। पुं॰ राजनि॥ महींपालयति। पाल॰। कर्मण्यण्॥
महीप्राचीरम्। न॰ समुद्रे॥
महीभृत्। पुं॰ पर्वते॥ नृपे॥
महीमय:। त्रि॰ मृत्तिकानिर्मिते॥ मह्याविकारे॥
महीयान्। त्रि॰ महत्तरे॥
महीरुह:। पुं॰ शाखिनि। पादपे। वृक्षे॥ शाकवृक्षे॥ मह्यांरोहयति। रुहबीजजन्मनिप्रादुर्भावे। इगुपधेति क:॥
महीलता। स्त्री॰ किञ्चुलुके। केंचुवा॰ इतिख्याते॥ कृशत्वदीर्घत्वाभ्यांमह्यालतेव॥
महीसुत:। पुं॰ मङ्गलग्रहे। लोहिताङ्गे॥ मह्या: सुत:॥
महेच्छ:। त्रि॰ महाशये। महाभिलाषे॥ महतीइच्छाऽस्य॥
महेन्द्र:। पुं॰ कलिङ्गदेशस्थेकुलपर्वतविशेषे॥ सिद्धपीठोऽयमद्रि:। यथा। महान्तकोमहेन्द्रेचपार्वती चमहान्तकेति॥ त्रिसामाऋषिकुल्याद्यामहेन्द्रप्रभवा: स्मृता:।

इन्द्रे ॥ महांश्चासौ॰इन्द्रश्चमहान्वा अयमभूयोवृत्रमवधीदितिश्रुते : । ईश्वरे । विष्णौ ॥

महेन्द्रकदली । स्त्री॰ कदलीप्रभेदे ॥

महेन्द्रतनया । स्त्री॰ सरिद्भेदे ॥

महेन्द्रनगरी । स्त्री॰ अमरावत्याम् ॥

महेन्द्रपर्वत : । पुं॰ तीर्थविशेषे ॥

महेन्द्रमदभित् । पुं॰ श्रीकृष्णे ॥

महेन्द्रवारुणी । स्त्री॰ लताविशेषे । चित्रवल्ल्याम् । महाफलायाम् । वडीमाकाल्॰ इ॰ गौ॰ दे॰ भा॰ ॥

महेन्द्राणी । स्त्री॰ इन्द्रयोषिति । पुलोमजायाम् ॥ महेन्द्रस्यस्त्री । महतीचासाविन्द्राणीचेतिवा ॥

महेन्द्रियम् । त्रि॰ माहेन्द्रे ॥ महेन्द्रो देवताऽस्य । महेन्द्राद्घाणौचेतिघः ॥

महेन्द्रीयम् । त्रि॰ माहेन्द्रे॰ हविरादौ ॥ महेन्द्रोदेवताऽस्य । महेन्द्राद्घाणौचेतिचकाराच्छ : ॥

महेरणा । स्त्री॰ कुन्दुरुक्याम् । शल्लकीवृक्षे ॥ महदीरणमस्या : ॥ महमुत्सवमीरयतिवा । ईर॰ । ल्यु : ॥

महेला । स्त्री॰ महिलायाम् ॥ वामायाम् ॥ महस्यउत्सवस्य॰ इला भूमि: ॥ यद्वा । महति॰ मह्यतेवा । सलिकलीतीलच् । पृषोदरादि: ॥ माया : हेलाक्रीडावा । परमहेलारतोऽप्यपारदारिकइतिदमयन्तीकाव्यम् ॥

महेलिका । स्त्री॰ महेलायाम् ॥ स्वार्थेकन् ॥

महेश : । पुं॰ शिवे ॥ महेशान्नापरो देव : ॥

महेशबंधु : । पुं॰ श्रीफलवृक्षे । बिल्वे । महेशस्यबन्धुरिव ॥

महेशिता । त्रि॰ परमेश्वरे । परदेवतायाम् ॥ महांश्चासावीशिताच । सन्महदितिसमास : ॥

महेश्वर : । पुं॰ शिवे । महादेवे ॥ महेश्वरस्त्र्यम्बकएवनापरइतिरघु : ॥ विश्वस्यानाश्चसर्व्वेषांमहतामीश्वर : स्वयम् । महेश्वरस्ततिमेमंप्रवदन्तिमनीषिण : ॥ महांश्चासावीश्वरश्च । सन्महदितिसमास : । त्रि॰ अधीश्वरे ॥

महेश्वरी । स्त्री॰ महेश्वरपत्न्याम् । भगवत्याम्परदेवतायाम् ॥ अपराजितायाम् ॥ पित्तलप्रभेदे । कपिलायाम् । ब्रह्मरीत्याम् ॥ राजरीत्याम् । महतीचासावीश्वरीच ॥

महेष्वास : । पुं॰ हरौ ॥ शिवे ॥ महानवितथइष्वासइषुक्षेपोयस्यस : ॥ त्रि॰ उत्तमधानुष्के ॥

महैरण्ड : । पुं॰ स्थूलैरण्डे ॥

महैला । स्त्री॰ स्थूलैलायाम् ॥

महोक्ष : । पुं॰ वृहद्वृषे । वृषभे ॥ महांश्चासावुक्षाच । अचतुरेति साधु : ॥

महोटिका । स्त्री० )
महोटी । स्त्री० ) हस्त्याम्
महोत्पलम् । न० पद्मे । नलिने । अ
रविन्दे । महच्चतत्उत्पलञ्च ॥
महोत्सव: । पुं० अतिशयितसुखजन
कव्यापारे ॥ यथा । दुर्गातन्त्रेयम
न्त्रेणकुर्याद्दुर्गामहोत्सवम् । महा-
नवम्यांशरदिवलिदानंनृपादय: ॥
महोत्साह: । पुं० राज्याङ्गप्रागराज-
पुरुषे । अतिशयोद्यमे ॥ वि० अति
शयोत्साहयुक्ते ; महोद्यमे ॥ दु:
साध्यकार्य्ये विसाधनपरे ॥ महान्
उत्साहोऽस्य ॥ परदेवतायाम् ॥ उ-
त्कृष्टत्वादनात्यर्थमुद्युक्तत्वात् ॥
महोदधि: । पुं० समुद्रे ॥
महोदधिशय: । पुं० नारायणे ॥ प्र-
लयेसर्वभूतानिसंहृत्येकार्णवेजगत् ।
कृत्वाऽधिशेते । शीङ्स्वप्ने । अ: ॥
महोदय: । पुं० कान्यकुब्जदेशे ॥
आधिपत्ये ॥ अपवर्गे । मोक्षे ॥ स
दाकृतयुगस्यास्तुसदाचारपरायण
म् । सदामहोदयस्यास्तुवाय्यांनिव
सतांसताम् । महात्मनि ॥ स्वामि
नि ॥ दृध्यक्तमधुनि ॥ न० पुरविशे
षे । कान्यकुब्जे । गाधिपुरे । कनौ
ज० इतिमहोदाइतिचभाषा ॥ महा
नुदयोवैभवंयस्य० यचवा ॥
महोदया । स्त्री० मेरोश्चक्रवाटाख्योर्ध्व
मेखलायाउदग्दिशिसोमस्यपुर्या-
म् । यथोक्तम्मगेन्द्रसंहितायाम् । म
होदयाचन्द्रमस: श्वेतायुक्तादिनि
र्मिता । द्विजसङ्घस्तुताभातिपुरे
हिमगिरिप्रभेरिति । नागबलाया
म् ॥
महोदर: । पुं० वृहदुदरे ॥ वि० त-
द्वति ॥
महोदरी । स्त्री० रवे: सङ्क्रमणवि
शेषे कुजादिवारभेदेयदासङ्क्रम:
स्यान्महोदरीसीतकरावांसुखाय ।
महाबलावयोश्च ॥
महोद्यम: । वि० महोत्साहे । दु:
साध्यकार्य्ये विसाधनपरे । महानुद्य
मोऽस्य ॥
महोन्नत: । पुं० तालागमे ॥ वि० म
होन्नतिविशिष्टे ॥
महोन्नति: । स्त्री० अतिशयवृद्धौ ॥ य
था । भूयात्तेसहदैश्वर्यपुत्रपौत्रैर्मा
महोन्नति: । अव्याधिनाशरीरेण
चिरञ्जीवसुखीभव ॥
महोन्माद: । पुं० फलकर्याम् । फलु-
इ० माषह० गौ० दे० भा० प्र० मोने ॥
महोमर्ग: । पुं० मार्यादिजु ॥
महोरग: । पुं० वासुकिसर्पे ॥ वृह-
त्सर्पे ॥ महांश्चासाउरगश्च ॥ न० त
गरमूले ॥
महोल्का । स्त्री० बृहत्यां ॥ उल्काविशे-
शेषे ॥ उल्कालक्षणन्तु । तत्क्षिप्ता
अणुल्कायारक्तनीलशिखोज्ज्वलापी

रुषीचप्रमाणेनउल्कानानाविधास्मृता ॥

महौजा : । त्रि० वीर्यवति ॥ महानुभावे ॥ महत्ओजोयस्येतिविग्रहः ॥

महौषधम् । न० शुण्ठ्याम् ॥ विषायाम् । अतिविषायाम् । अतीस० इ० भा० ॥ लशुने ॥ भूम्याहुल्यै ॥ वाराहीकन्दे ॥ वत्सनाभे ॥ पिप्पल्याम् ॥ सुरायाम् ॥ महौषधंयज्जीवानांदु:खविस्मारकंमहत् । आनन्दजनकंयच्चतदाख्यातस्खलच्चणम् ॥ महच्चतत्औषधञ्च ॥

महौषधि : । स्त्री० दूर्वायाम् ॥ लज्जालुच्चुपे ॥

महौषधिगण : । पुं० पृश्निपर्ण्यादिषु ॥ यथा । पृश्निपर्णीश्यामलताभृङ्गराजशतावरी । गुडूचीसहदेवाचमहौषधिगणा : स्मृता : ॥

महौषधी । स्त्री० छिलमोचिकायाम् ॥ श्वेतकण्टकार्याम् ॥ कटुकायाम् ॥ अतिविषायाम् ॥

महौषध्यष्टकम् । न० महास्नानीयद्रव्यविशेषे ॥ यथा । सहदेवीतथाव्याघ्रीबलाचातिबलातथा । शङ्खपुष्पीतथासिंहीचाष्टमीचसुवर्चला ॥ महौषध्यष्टकंप्रोक्तंमहास्नानेनियोजयेत् ॥

मा । अ० वारणे ॥ विकल्पे ॥

मा । स्त्री० लक्ष्म्याम् । पद्मालयायाम् ॥ विद्यायाम् ॥ माने ॥ मातरि ॥ मानम् । माधातो : सम्पदादित्वात्क्विप् ॥

मांसम् । न० पिशिते । तरसे । पललै । आमिषे । अस्रजे । रक्तजधातौ । मांस० इ० भा० ॥ मांसंवातहरंसर्वंवृंहणंबलपुष्टकृत् । प्रीणनंगुरुहृद्यञ्चमधुरंरसपाकयो : ॥ मांसवर्गोद्विधाप्रोक्तोजाङ्गलाऽनूपभेदत : ॥ तत्रसद्योहतादिमांसेषुविशेषउक्त : सचोच्यते । यथा । सद्योहतस्यमांसंस्याद्व्याधिघातियथामृतम् । वयस्थंवृंहणंसात्म्यमन्यथातद्विवर्जयेत् ॥ स्वयंमृतञ्चाबल्यमतीसारकरंगुरु ॥ वृद्धानांदोषलंमांसंबालानांबलदंलघु । त्रिदोषकृद्व्यालजुष्टंशुष्कंशूलकरंगुरु ॥ विषाम्बुरुङ्मृतस्यैतन्मृत्युदोषकृत्काकरम् ॥ क्लिन्नमुत्क्लेदजनकंकृशंवातप्रकोपनम् ॥ तोयपूर्णगिराजालंमृतमप्युत्रिदोषकृत् ॥ विहङ्गेषुपुमान्श्रेष्ठ : स्त्रीचतुष्पदजातिषु । पराद्धंलघुपुंसांस्यात्स्त्रीणांपूर्वार्द्धमादिशेत् ॥ देहमध्यंगुरुप्राय : सर्वेषांप्राणिनांस्मृतम् । पचौत्र्चेपादिहङ्गानांतदेवलघुकथ्यते ॥ गुरूण्यण्डानिसर्वेषांगुर्वीग्रीवाचपक्षिणाम् । उरस्कन्धोदरंमूर्द्धापाणौपादौकटिस्तथा । पृष्ठत्वग्यकृद

स्याणिगुरूणोहयथोत्तरम् ॥ लघुशा
तहरं मांसं खगानांधान्यचारिणा
म् । मत्स्याशिनांपित्तकरं वातघ्नं
गुरुकीर्त्तितम् ॥ फलाशिनांश्लेष्म
हरं लघुरूक्षमुदीरितम् । श्लेष्म
गुरुवातघ्नं तेषामेवफलाशिनाम् ॥
तुल्यजातिष्वल्पदेहामहादेहेषुपूजि
ताः । स्वल्पदेहेषुशस्यन्ते तथैवस्थू
लदेहिनः ॥ चेष्टावतांपरं मांसं
हृद्यं रुच्यं लघुस्मृतम् ॥ येमृतावि
षगायेचदूरावासप्रचारकाः । ते
चाभिष्यन्दिनः सर्वे विपरीतम
तोन्यथा ॥ जलानूपचराः सर्वे त
थास्थलचराश्चये । गुरुभक्ष्यागुरुत
रं तेषांमांसमुदीरितम् ॥ धान्योत्प
त्तिप्रचाराणां लघुस्याल्लघुपक्षिणा
म् ॥ ग्राम्यं मांसं वनजमथवानूपजं
वाविलोत्थं श्रुतं पीतं हरितमरुणं
पाचितं सूपकारैः । तच्च शूल्यं
सरसमधुरं खेदितं वह्नितं वायस-
प्रायोयद्भिरुचितं स्तूयतेतेनतद्धि
व्यपिच । मांसन्तुत्रिविधं ज्ञेयं मृदु
लंकठिनंघनम् ॥ पारावतजचट
कशशशूकरटिट्टिभाः । क्षुद्रमत्
स्यादिकाः सर्वे मांसेषुमृदुलाः
स्मृताः । मृगरोहितकाद्याश्चमत्
स्याः शल्लकिशम्बराः । एतेकठि
नमांसाः स्युः पक्षिणोजलचारि
णः ॥ गजकूर्मीरखड्गाद्याः सग

मांसम्

स्यावर्करादयः । गोधागोधाल्लुला
याद्याःघनमांसाःप्रकीर्त्तिताः॥एकत्र
सर्वमांसानिविरुद्ध्यन्तेपरस्परम्॥
वैद्यशास्त्रोक्तविधिनामांसस्योक्तागु-
णाइमे । मनूक्तविधिनावच्मि विधिं
भक्षणवर्जने ॥ प्रोक्षितंभक्षयेन्मांसं
ब्राह्मणानाञ्चकाम्यया । यथाविधि
नियुक्तस्तुप्राणानामेवचात्यये ॥ प्रा
णस्यान्नमिदंसर्वंप्रजापतिरकल्पयत्।
स्थावरंजङ्गमञ्चैवसर्वंप्राणस्यभोजन
म् ॥ चराणामन्नमचरादंष्ट्रिणाम-
प्यदंष्ट्रिणः । अहस्ताश्चसहस्तानां-
शूराणांचैवभीरवः ॥ नात्तादुष्य-
त्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि
। धात्रैवसृष्टाह्याद्याश्चप्राणिनोऽत्ता
रएवच ॥ यज्ञायजग्धिर्मांसस्येत्त्य
षदैवोविधिःस्मृतः । अतोन्यथा
प्रवृत्तिस्तुराक्षसोविधिरुच्यते ॥ क्री
त्वास्वयंवाप्युत्पाद्यपरोपकृतमेववा।
देवान्पितॄंश्चार्चयित्वाखादन्मांसंन
दुष्यति ॥ नाद्यादविधिनामांसंवि
धिज्ञोऽनापदिद्विजः । जग्ध्वाह्यवि
धिनामांसंप्रेत्यतैरद्यतेऽवशः ॥
नतादृशंभवत्येनोमृगहन्तुर्धनार्थिनः
। यादृशंभवतिप्रेत्यवृथामांसानि-
खादतः । नियुक्तस्तुयथान्यायंयो
मांसंनात्तिमानवः । सप्रेत्यपशुतां
यातिसम्भवानेकविंशतिम् ॥ अस
स्कृतान्पशून्मन्त्रैर्नाद्याद्विप्रः क

दापन । मन्त्रैस्तुसंस्कृतानामद्याच्छा श्वतंविधिमास्थितः। कुर्याद्घृतप शुंसङ्गे कुर्यात्पिष्टपशुंतथा । नत्वे वतुवृथाहन्तुं पशुमिच्छेत्कदाचन । यावन्तिपशुरोमाणितावत्कृत्वोह मारणम् । वृथापशुघ्नः प्राप्नोति प्रेत्यजन्मनिजन्मनि ॥ यज्ञार्थेप शवः सृष्टाः स्वयमेवस्वयम्भुवा । यज्ञोऽस्यभूत्यैसर्वस्यतस्माद्यज्ञे वधो ऽवधः ॥ ओषध्यः पशवोवृक्षास्ति र्यञ्चः पक्षिणस्तथा। यज्ञार्थंनिधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥ मधुपर्केचयज्ञेच पितृदैवतकर्मणि। अत्रैवपशवोहिंस्यानान्यत्रेत्यब्रवी न्मनुः॥ एष्वर्थेषुपशून्हिंसन्वेद तत्त्वार्थविद्द्विजः। आत्मानञ्चपशुंश्चै वगमयत्युत्तमांगतिम् ॥ गृहेगुरा वरण्येवानिवसन्नात्मवान्द्विजः । नवेदविहितांहिंसामापद्यपिसमा चरेत् ॥ यावेदविहिताहिंसानि यतास्मिंश्चराचरे । अहिंसामेवतां विद्याद्वेदाद्धर्मोहिनिर्बभौ॥ योऽहिं सकानिभूतानिहिनस्त्यात्मसुखेच्छ या। सजीवंश्चमृतश्चैवनक्वचित्सुख मेधते । योबन्धनवधक्लेशान्प्रा णिनांनचिकीर्षति । ससर्वस्यहित प्रेप्सुः सुखमत्यन्तमश्नुते यद्ध्या यतियत्कुरुतेधृतिंबध्नातियत्र च । तदवाप्नोत्ययत्नेनयोहिनस्तिनकिं

चन ॥ नाकृत्वाप्राणिनांहिंसांमांस मुत्पद्यतेक्वचित् । नचप्राणिवधः स्वर्ग्यस्तस्मान्मांसंविवर्जयेत्॥ स समुत्पत्तिञ्चमांसस्य वधबन्धौचदेहि नाम् । प्रसमीक्ष्यनिवर्त्तेतसर्वमां सस्यभक्षणात् ॥ नभक्षयतियोमां- संविधिंहित्वापिशाचवत् । सलोके प्रियतांयातिव्याधिभिश्चनपीड्यते॥ अनुमन्ताविशसितानिहन्ताक्रयवि क्रयी । संस्कर्त्ताचोपहर्त्ताचखादक- श्चेतिघातकाः ॥ स्वमांसंपरमां सेनयोवर्द्धयितुमिच्छति । अनभ्यर्च्य पितॄन्देवांस्ततोन्योनास्त्यपुण्यकृ त् ॥ वर्षेवर्षेश्वमेधेनयोयजेतशतंस माः । मांसानिचनखादेद्यस्तयोः पुण्यफलंसमम् । फलमूलाशनैर्मे ध्यैर्मुन्यन्नानाञ्चभोजनैः । नतत्- फलमवाप्नोतियन्मांसपरिवर्ज्जना- त् ॥ ५४ ॥ मांसभक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य- मांसत्वंप्रवदन्तिमनीषिणः ॥ न- मांसभक्षणेदोषोनमद्येनचमैथुने । प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहा- फला ॥ अपिच । श्रीमद्भागवतेवित्त क्ते । मांसन्तुत्रिविधंप्रोक्तंजलभूच रखेचरम् । यस्मात्तस्मात्समानो तयेनक्लैनविघातितम् ॥ तत्सर्वंदै वताप्रीत्यैभवेद्वनसंशयः । साध कोच्छावलवतोदेयैवस्तुनिदैवते ॥ य

श्रिषे । मांसकाचिखंट० द्युतिभाषा ॥ शुद्धमांसंतनूकृत्यकर्त्तितंस्वेदितं ततः । लवङ्गहिङ्गुलवणमरिचार्द्र-कसंयुतम् । एलाजीरकधान्याकनिम्बूरससमन्वितम् । घृतेसुगन्धितंकृष्टपूरणंप्रोच्यतेबुधैः ॥ शृङ्गाटकंसमितयाकृतंपूरणपूरितम् । पुनःसर्पिषसम्भृष्टं मांसशृङ्गाटकंवदेत् ॥ मांसशृङ्गाटकंरुच्यंवृष्यंबलकृद्गुरु । वातपित्तहरंहृद्यंकफघ्नंवीर्यवर्द्धनम् ॥

मांससार : । पुं॰ मेदसि ॥ मांसस्यसार : ॥

मांसस्नेह : । पुं॰ मेदसि ॥

मांसच्छदा । स्त्री॰ चर्मणि ॥

मांसिक : । त्रि॰ मांसविक्रयजीविनि । वैतसिके ॥ मांसंपण्यमस्य । तदस्यपण्यमितिठक् ॥ यद्वा । मांसंनियुक्तंदीयतेऽस्मै । श्राणामांसौदनाट्टिठन् । टिलान्ङीप् ॥ इकारउच्चारणार्थः ॥

मांसिका । स्त्री॰ मांस्याम् ॥ मन्यते । मनज्ञाने । मनेर्दीर्घश्चेतिसः । गौरादिः । स्वार्थेकन् ॥

मांसिनी । स्त्री॰ जटामांस्याम् ॥

मांसी । स्त्री॰ कक्कोल्याम् ॥ मांसच्छदायाम् ॥ तपस्विन्याम् । जटामांस्याम् ॥ मांसीतिक्ताकषायाचमेध्याकांतिबलप्रदा । स्वाद्वीहिमाग्नि

दोषास्रदाहवीसर्पकुष्ठनुत् ॥ मन्यते । मन॰ । मनेर्दीर्घश्चेतिसः । गौरादिः ॥

मांसीष्टा । स्त्री॰ पक्षिप्रभेदे । वल्गुलायाम् । दिवांधायाम् वादुड इ॰भा॰ ॥

मांसौदनम् । न॰ मांससंयुक्तौदने । पललौदने ॥

मांसौदनिक : । त्रि॰ मांसौदनार्हे ॥ मांसौदनंनियुक्तंदीयतेऽस्मै । श्राणामांसौदनाट्टिठन् । टोऽग्निवर्धः । इकारउच्चारणार्थः ॥

मांस्यादि : । पुं॰ जटामांस्यादिगणनायाम् ॥ जटामांसीनखंपत्रीशवङ्गतगरंरसः । शिलयागन्धपाषाणः समांस्यादिकाश्रमी ॥

माकन्द : । पुं॰ सहकारे ॥

माकन्दी । स्त्री॰ आमलकीफले ॥ नगरविशेषे ॥ बहुमूल्याम् । मादन्याम् । गन्धमूलिकायाम् । माद्राणी॰मांगनी॰इ॰भा॰ ॥ पीतचन्दने ॥

माकरी । स्त्री॰ माघशुक्लसप्तम्याम् ॥ यदाजन्मकृतंपापंमयासप्तसुजन्मसु । तन्मेरोकञ्चशोकञ्चमाकरीहन्तुसप्तमीतिपठित्वास्नायात् ॥ रथसप्तमीतिनामान्तरम् ॥ रोकंच्छिद्रम् ॥

माकिम् । अ॰)

माकिर् । अ॰)वर्जने ॥

उक्तं हिभरतसूत्रे । भिधुकधपथ कराचमाम : पुरावासिषेटकादौ नांमागधीति । मगध •देशेभवा । तत्रभवइत्यण् ॥

मागधा । स्त्री० कर्कर्व्यां ॥

माघ : । पुं० मासविशेषे । तपसि ॥ अत्रजातस्यफलम् । यथा । विद्या विनीतस्वकुलप्रधानसदासदाचारयु तःप्रवीणः। योगानुरक्तोविषयेषुसक्तो माघेथमासे मघवानिवेश : इति॥ माघीपौर्णमास्यस्मिन्पौषमासो स्यण् ॥ श्रीदत्तकसूनौशिशुपाल वधमहाकाव्यकर्त्तरि ॥ तस्यनाम्ने वस्त्यास्ते महाकाव्ये ॥ यथा। पुष्पे पुजातीनगरेषुकाशी नारीषुरम्भा पुरुषेषुविष्णु : । नदीषुगङ्गानृप तौचराम : काव्येषुमाघ : कवि कालिदास : ॥ इत्याधुनिक : क-श्चित्

माघवती । स्त्री० पूर्वदिशि ॥

माघवनम् त्रि० इन्द्रसम्बन्धिनि ॥ मघवतइदम् । अण् ॥

माघी । स्त्री० तपोमासस्यपूर्णिमाया म् ॥ मघयायुक्तापौर्णमासी । नक्षत्रेणयुक्तः काल इत्यण् । ततोङीप् ॥

माघोनी । स्त्री० पूर्वदिशि ॥

माघ्यम् । न० कुन्दपुष्पे ॥ माघेसा धु । तत्रसाधुरितियत् ॥ माघेभव म् । दिगादित्वाद्यत् ॥

माङ् । अ० निषेधे ॥ आशङ्कायाम्॥

माङ्गलिक : । पुं० प्रणवे । अथशब्दे॥ प्रणवश्चाथशब्दश्चद्वावेतौब्रह्मण : पु रा । कण्ठंभित्त्वाविनिर्यातौतस्मा न्माङ्गलिकावुभौ ॥ मङ्गलायहित मार्गे तूर्यादिवाद्ये ॥ अपराईताभी ष्टार्थसिद्धिर्मङ्गलम् । मङ्गलंप्रयोज नमस्य । प्रयोजनमितिठक् ॥ यथा माङ्गलिकआचार्य्य इति ॥

माङ्गल्यम् । न० मङ्गलक्रियायाम् ॥ मङ्गलायहिते ॥ यथा । माङ्ग ल्ये पुविवाहेपुकन्यासंवरणे पुच । दशमासा : प्रशस्यन्ते चैत्रपौषविव र्जिता : ॥ इतिराजमार्त्तण्ड : ॥ मङ्गलस्यभाव : । भावेष्यञ् ॥

माङ्गल्यार्हा । स्त्री० त्रायमाणायांल तायां ॥

माच : । पुं० पथि ॥

माचल : । पुं० बन्दिचौरे ॥ रुजि ॥ ग्राहे ॥

माचिका । स्त्री० मक्षिकायाम् ॥ अ म्बष्ठायाम् ॥ मोइया० इ० पश्चि मदेशप्रसिद्धायामौषधौ ॥ माचिका म्लारसे पाकेकषायाशीतलालघु : । पक्वातीसारपित्तास्रकफकण्ठाम यापहा ॥

माचिरम् । अ० शीघ्रे ॥

माचीपत्रम् । न० सुरपर्णे ॥

माजल : । पुं० चाषपक्षिणि ॥

ष्यञ् ॥

माषव्यम् । न० माषवहन्दे ॥ माषवानांसमूहः । ब्राह्मणमाणववाडवाद्यत् ॥ माषवत्वे ॥ माषवस्यकर्म भावोवा । ब्राह्मणादित्वात्ष्यञ् ॥

माणिका । स्त्री० अष्टपलपरिमाणे ॥

माणिक्याम् । न० रत्नविशेषे । शोणरत्ने । रत्नराजि । रविरत्नके । पद्मरागे । कुरविन्दे । माणिक० माणक० इतिभाषा । तस्यलक्षणं यथा स्निग्धं गुरुगात्रयुतं दीप्तं स्वच्छं सुरङ्गं समाङ्गम् । इतिज्ञात्वं माणिक्यं कल्याणं धारणात्कुरुते । तस्यदोषायथा । द्विच्छायमभ्रपिहितं कर्कशमाकीरिलं भिन्नधूम्रञ्च । विरूपं रागविमलं लघुमाणिक्यं नधारयेद्धीमान् ॥ तस्यचतुर्विंधाजातिर्यथा । तद्रक्तं यदिपद्मरागमथतत्पीतातिरक्तं द्विधाजानीयात्कुरुविन्दकंयद्रुणं स्यादेषसौगन्धिकम् । तन्नीलं यदिनीलगन्धिकमितिज्ञेयं चतुर्धाजु धैर्माणिक्यंकषघर्षणे प्यविकलंरागेणजात्यंजगुः ॥ विशेषोन्यत्र युक्तिकल्पतरौद्रष्टव्यः ॥ मणिकमेव । चतुर्वर्णादीनांस्वार्थेउपसङ्ख्यानमितिष्यञ् ॥

माणिक्या । स्त्री० ज्येष्ठाम् । मुसल्याम् । गृहगोधायाम् । पल्ल्याम् ॥

माणिमन्थ्यम् । न० सैन्धवलवणे ॥ मणिमन्थाख्ये पर्वतेभवम् । तत्रभवः इ० अण् ॥

माण्डलिकः । पुं० ग्रामसङ्घराज्ञि ॥ मण्डलस्यव । चतुरुत्यादिभ्यष्ठक् ॥

माण्डूक्यम् । न० उपनिषद्विशेषे ॥

मातङ्गः । पुं० श्वपचे । गजे । हस्तिनि । अर्हदुपासकविशेषे ॥ मतङ्गस्यायम् । तस्येदमित्यण् ॥ मतङ्गस्यापत्यम् । शिवाद्यण्वा ॥

मातङ्गनक्रः । पुं० मातङ्गाकारेग्राहे ॥

मातङ्गमकरः । पुं० महामत्स्यप्रभेदे । मातङ्गाकारेमत्स्ये ॥

मातङ्गी । स्त्री० महाविद्याविशेषे ॥ मतङ्गस्यमुनेः कन्यामातङ्गीसाप्रकीर्त्तिता ॥

मातरपितरौ । पुं० द्विवचनान्तोयम् । सहोक्त्यामातापित्रोः ॥ माताच पिताच । मातरपितरावुदीचामितिपूर्वपदे० ऋकारस्यारङादेशोनिपातनात् ॥

मातरि । अ० अन्तरीक्षे ॥ सप्तम्यन्तप्रतिरूपकमव्ययम् ॥

मातरिश्वा । पुं० वायौ । सर्वप्राणभृतांक्रियाहेतुभूते ॥ मातरि० अन्तरिक्षेश्वयतिवर्द्धतेगच्छति । टुओश्वि गतिवृद्ध्योः । यद्वा । मातरि०

जनन्याम् । श्वयतिवर्त्तेते । समस्तप्रयत्वात् । गर्भस्यएवायंग्रामयोमपद्मागद्रागः । ज्ञातद्रव्य पाप्यायती । स्वनु चञ्चितिसूत्रे च । कनिप्रत्ययोधातोरिकारलोपश्चनिपातनात् । सप्तम्यामलुक्च ॥ मातरीतिसप्तम्यन्तप्रतिरूपकमव्ययंवा ।

मातलिः । पुं० इन्द्रस्यसारथौ ॥ मतं लाति । मातीमुपैतिकः । मतलस्यापत्यम् । अतइञ् ।

मातापितरौ । पुं० द्विवचनान्तोयम् ॥ पित्रोः । मातरपित्रोः ॥ माताचपिताच । आनङ्ऋतोद्वन्द्वे ॥ अभ्यर्हितत्वात्पूर्वंनिपातः । चतुर्दशगुणंमातागौरवेणातिरिच्यते ॥

मातापुरम् । न० सह्याद्रौरेणुकाधिष्ठितेअम्बिकास्थाने ।

मातामहः । पुं० मातुः पितरि ॥ मातुः पिता । मातृपितृभ्यांपितरिडामहच् ।

मातामही । स्त्री० मातुर्जनन्याम् ॥ मातुर्माता । मातरिषिच्चेतिडामहच् । षित्वान्ङीष् ॥

मातिः । स्त्री० मानि ॥ अवच्छेदे ॥ मानम् । माङ्० । क्तिन् ।

मातुलः । पुं० मातुर्भ्रातरि । पितृव्याखि । मातुर्भ्राता । पितृव्यमातुलेतिनिपातनात् । मातुर्डुलच् । व्रीहिप्रभेदे ॥ मदनद्रुमे ॥ सर्पविशेषे ॥ धुस्तूरे ॥ मास्ति । नास्तितुलाअस्य । मा० श्रीः तुलाऽस्येतिवा । अमरकनामकत्वात् ॥

मातुलकः । पुं० धुस्तूरवृक्षे ।

मातुलपुत्रकः । पुं० धत्तूरस्यफले ॥ मातुलस्यपुत्रएव । कन् ॥ मातुलसुते ॥

मातुला । स्त्री० मातुलान्याम् ॥

मातुलानी । स्त्री० मातुलस्यस्त्रियाम् ॥ मातुलस्य स्त्री । इन्द्रवरुणेत्यादिनामातुलशब्दात्पुंयोगे० मातुलोपाध्याययोरानुक्० ङीष् ॥ कलाये ॥ भंगायाम् ॥ मायास्तुला० मातुलामानयति । अनप्राणनेगतौवा । कर्मण्यण् । ङीप् ॥ मातुलस्यधत्तूरस्यस्त्रीववा । पूर्ववनुङीवानुक्॥ शणे । प्रियङ्गुवृक्षे ।

मातुलाहिः । पुं० चित्रसर्पे । मालुधाने ॥ मातुलयति । मूलविभुजादित्वात्कः । मातुलयासार्पिक्षु । मालुयासांप० फेयुआटी० इतिचयस्यगौडदेशेप्रसिद्धिः । अयं खट्वाकृतिरायतदेहोदीर्घलांगूलचतुष्पादितिकेचित् ॥

मातुली । स्त्री० मातुलान्याम् ॥ मातुलस्यस्त्री । मातुलोपाध्याययोरानुग्वेत्यानुयागमाभावे० इन्द्रवरुणे

तिङ्गीष् ॥ भङ्गायाम् ॥

मातुलुङ्गः । पुं० वीजपूरे । क्षोलङ्गि । टावालेंबुङ्ग० गौ० दे० भाषा ॥ मिनात्यरुचिम् । मीञ्हिंसायाम् । बाहुलकात्तुन् । लुञ्ज्यते । लुजिर्भाषार्थः । घञ् । चजोरिति कुत्त्वम् । न्यङ्क्वादित्त्वाद्वा । मातुलस्यासौलुङ्गश्च ॥

मातुलुङ्गकः । पुं० क्षोलङ्गवृक्षे । फलपूरे । वीजपूरे । रुचिके ॥ स्वार्थेकन् ॥

मातुलुङ्गा । स्त्री० मधुकुक्कुट्याम् ॥ यथा । मातुलुङ्गासुगन्धान्यागिरि आपतिपुष्पिका । अत्यस्मादेवदूतीच साक्षाचिन्मधुकुकुटी ॥ इतिरत्नमाला । मखुर० इ०महूर० इ० गौ० देशभाषा० ॥

मातुलुङ्गिका । स्त्री० वनवीजपूरे ॥

मातुलेयः । पुं० स्त्री० मातुलस्यापत्ये । शुभ्रादित्वाट्ढक् ॥

माता । त्रि० प्रस्थादिनाधान्यादिमातरि ॥ मिनोति । डुमिञ्० तृच् पुं० साधिष्ठानवुद्धिस्थचिदाभासरूपेप्रमातरि ॥

माता । स्त्री० जनयित्र्याम् । प्रस्वाम् । जनन्याम् । सवित्र्याम् । मा० इ०भाषा ॥ आपदिमातैवशरणम् ॥ षोडशप्रकारामातरो यथा । स्तनदात्रीगर्भधात्रीभक्ष्यदात्रीगुरुप्रिया । अभीष्टदेवपत्नीचपितुः पत्नीचकन्यका ॥ सगर्भजायाभगिनीपुत्रपत्नीप्रियाप्रसूः । मातुर्मातापितुर्मातासोदरस्यप्रिया तथा ॥ मातुःपितुश्चभगिनीमातुलानी तथैवच । जनानांवेदविहितामातरः षोडशस्मृताः तस्यागौरवं यथा । जनकोजन्मदानत्वात्पालनाच्च पितास्मृतः । गरीयान्जन्मदातुश्च योन्नदातापितामुने ॥ विमान्नाञ्चशरीरेदेहोननित्यः पितुरुद्भवः । तयोः शतगुणं माताप्ज्यामान्या चवन्दिता ॥ गर्भधारणपोषाभ्यां साचताभ्यांगरीयसी । इतिब्र० वै० पु० ॥ अत्रमनुर्यथा । उपाध्यायान्दशाचार्य आचार्याणांशतंपिता । सहस्रन्तुपितृन्माता गौरवेणातिरिच्यत इति ॥ नपितुर्वचनंकार्यं यथा । मातुः मृतेनहि । पिताच पतितस्त्याज्योनमातासत्सुतेनहि ॥ गर्भधारणपोषाभ्यांतेनमातागरीयसी । दशविप्रादुपाध्यायोगौरवेणातिरिच्यते ॥ तेभ्यः पिताद्दशभ्यस्तुमाताचैवगरीयसी । मातृतोन्यो नदेवोस्तितस्मात्पूज्यासदासुतैः ॥ मातुश्चयद्धितंकिञ्चित्कुरुते भक्तितः पुमान् । तद्धर्मंहिविजानीयादेवंधर्मविदोविदुः ॥ पितुर्भगिन्यां मातुश्च ज्यायस्यांस्वसर्यपि ।

मातृवत्पूजनीयमातिष्ठेन्मातातातान्यो गरीयसीतिमनुः ॥ त्वमातापिता ब्रह्मपरात्परम् । युवयोः प्रीणनंयस्मात्तस्मात्किंशृणु तातपः ॥ स्वभावतोभवेन्माता पुत्रे निष्करुणावती । तेनभक्तोत्तमा यान्तु पत्नीवत्क्रियतः परम् । धिगस्तुजन्मतेषांविक्रतघ्नामात्मुपापिनाम् । येसर्वमातरंदेवीत्योपास्यांमभजन्तिवे ॥ मनिर्वोपासनानित्यामविष्णूपासनातथा । नित्योपास्तिः पुरादेव्यानित्यापूर्ण्यवचोदिता ॥ जिमयावक्तुवक्तव्यंस्यागेसंशयवर्जिते । सेवनीयापदास्मोजंभगवत्यानिरन्तरम् ॥ गवि ॥ भूमौ ॥ दुर्गायाम् ॥ लक्ष्म्याम् ॥ रेवत्याम् ॥ आखुकर्ण्याम् ॥ इन्द्रवारुण्याम् ॥ महाश्रावण्याम् ॥ जटामांस्याम् ॥ गौर्यादिषु ॥ यथा । गौरीपद्माशचीमेधासाविसीविजयाजया । देवसेनास्वधास्वाहाशान्तिःपुष्टिर्धृतिः क्षमा । आत्मनोदेवता चैवतथैवकुलदेवता ॥ ब्राह्म्यादिषु ॥ यथा । ब्राह्मीमाहेश्वरीचैन्द्रीवाराहीवैष्णवीतथा । कौमारीचैवचामुण्डाचर्चिकेत्यष्टमातरः ॥ सप्तमातरोयथा । ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा । वाराहीचतथेन्द्राणीचामुण्डासप्तमातरः ॥ मान्यंते॰ पूज्यन्तेलोकमातृत्वादितिमातरः । मानपूजायाम् । नप्तृनेष्टृ॰ इत्यादयुणादिसूत्रेणनिपातितः ॥ मान्निशिवपरिवारत्वेनसमाविशन्तीतिवा ॥ मातिगर्भोऽस्यांवा ॥ विभूतौ ॥

मातृकम् । त्रि॰ मातुरागतम् ॥ ततआगतइत्यधिकारे॰ऋतठञ् ॥

मातृका । स्त्री॰ धात्रकायाम् । उपमातरि ॥ मातरि । जनन्याम् ॥ देवीप्रभेदे ॥ वर्णमालायाम् । चादिवाक्यवर्णे ॥ करणे ॥ स्वरे ॥ ईश्वर्याम् ॥ शृङ्खारे ॥ मातेव । स्वार्थेतद्धितः ॥

मातृकेशटः । पुं॰ मातुले ॥

मातृतुल्या । स्त्री॰ । मातुः समानासु ॥ तायथा । मातृष्वसामातुलानीपितृव्यस्त्रीपितृष्वसा । श्वश्रूः पूर्वजपत्नीचमातृतुल्याः प्रकीर्त्तिताः ॥ माचातुल्या ॥ मातृशब्दसमानयामातृतुल्यस्वयंयया । मातरिवेवशब्दं नयाम्रसम्भाष्यतेनरः । सा मातृतुल्यासत्यं चधर्म्मः : साक्षीस तामपि ॥

मातृनन्दनः । पुं॰ कार्त्तिकेये । मङ्गसिंहे ॥

मातृबान्धवः । पुं॰ मातुर्मातादिषु ॥ मातुर्मातापिताभ्रातामातुर्भ्रातुःसुतास्तथा । मातुः पितुः सोदरा

स्वविष्णुयामात्रबाम्यशा :

मातृभोगीण :। त्रि० मातुर्हिते ॥ मातुर्भोग : शरीरम् ० तस्मै हित : । आत्मविश्वजनेत्यादिनाख : ॥

मातृमुख :। त्रि० जडे ॥ इतित्रिकाण्डशेष : ॥

मातृयोग :। पुं० यात्रायोगान्तरे ॥ यथा । अधिमात्रांशगेसौम्येमितेवाप्यसुरार्चिते । लग्नगेमातृयोगोयंशत्रूणांसन्धिकृत्सदा ॥

मातृवाहिनी। स्त्री० वल्गुलायाम्। मांसिष्टायाम्। पक्षिविशेषे ॥

मातृशासित :। पुं० मूर्खे ॥

मातृष्वसा। स्त्री० मातुर्भगिन्याम् ॥ मातु : स्वसा । मातृपितृभ्यांस्वसीतिषत्वं ॥

मातृष्वसेय:। पुं० मातृष्वसृसुते । मातृष्वसीये ॥ मातृष्वसुरपत्यम् । ढक्लोप: । अतएवज्ञापकाड्ढक् ॥

मातृष्वसेयी । स्त्री० मातुर्भगिनीसुतायाम् ॥ ङीप् ॥

मातृष्वस्रीय:। पुं० मातृष्वसृसुते॥मातृष्वसुरपत्यम्।मातृष्वसुश्चेति छण्।

मातृष्वस्रीया । स्त्री० मातुर्भगिन्या : कन्यायाम् । टाप् ॥

मातृसिंही । स्त्री० वासके ॥

मात्रम् । न० कार्त्स्न्ये ॥ यथा । जीवमात्रंनहिंसेत ॥ अवधारणे ॥ यथा । पयोमात्रंभुङ्क्ते ॥ मीयते० अनयावा । मति० मिमीतेवा । मामाने । माङ्मानेवा । हुयामाश्रुभसिभ्यस्त्रन् ॥ स्वार्थे ॥

मात्रा। स्त्री० कर्णभूषणे ॥ वित्ते । द्रव्ये ॥ माने ॥ ह्रस्वस्वराद्दीपरिच्छेदे ॥ अक्षरावयवे ॥ स्वल्पे ॥ काले । अकारादिलघूच्चारकाले ॥ वृत्ते ॥ कालविशेषे ॥ यथा । कालेनयावतापाणि : पर्येतिजानुमण्डले । सामात्राकविभि : प्रोक्ताह्रस्वदीर्घप्लुतेमता ॥ अपिच । वामजानुनितहस्तभ्रमणंयावतास्भवेत् । कालेनमात्रामात्रां यामुनिभिर्वेदपारगै : ॥ पुनश्च । स्वजानुन : करावर्त्तं कुर्याच्छोटिकयायुतम् । एषामात्राभवेदेकासर्वत्रैवैषनिश्चय: ॥ याथात्म्ये । विषयेषु ॥ मीयन्ते० इ० मात्रा : विषया : ॥ उपभोगयोग्यविशेषे इन्द्रियवृत्तिषु ॥ इन्द्रियेषु ॥ मीयतेऽनया० इतिमात्रा० परिच्छित्ति : ॥ मियन्ते विषयाआभिरितिमात्रा: ० इन्द्रियवृत्तय: ॥ मीयते० अनयावा । माति० मिमीतेवा । मामाने० माङ्मानेवा । ष्ट्रन् । अनित्य : षित्वं ङीष् । टाप् हुयामेतित्रन् ॥ पञ्चलघ्वक्षरेकाले ॥ अंशे ॥ यथा । नयोषिद्भ्य : पृथग्दद्यात्वसानदिनाद्दते । स्वभर्तृपिण्डमात्राभ्यस्तृ

शिरासांयत : स्मृतेति पिण्डेभ्य स्त्वल्पिकांमात्रामितिच ॥

मात्राकाल : । पुं॰ कालविशेषे । निमेषानन्तरंयावताकालेनस्वभावत-उन्मेषोभवतितावतिकाले ॥ निमेषोन्मेषणे मात्राकालोलघ्वक्षरंतथे-तिपुराणम् ॥

मात्रायाम् । ष॰ अल्पपरिमाणे ॥

मात्रीय : । त्रि॰ मात्रे हिते ॥ तस्मै हितमितिच्छ : ॥

मात्सर्य्यम् । न॰ अन्यशुभद्वेषे ॥ मत्सरएव । ष्यञ् ॥

मात्स्यिक : । त्रि॰ मत्स्यघातिनि ॥ मत्स्यान्हन्ति । पक्षिमत्स्यमृगान् हन्तीतिठक् । मत्स्यस्यङ्यामिति-परिगणनात्॰ सूर्यतिष्ये तियलो-पोन ॥

माथ : । पुं॰ अध्वनि । पथि ॥

माथुर : । त्रि॰ मथुरायांजाते ॥ तत्र जातइत्यण् ॥ शेषिकेष्वर्थेष्वेव ॥

माद : । पुं॰ दर्पे । हर्षे मदे ॥ मदनम् । मदीहर्षे । सधमाद्योरिति ज्ञापकात्॰ क्वचिदप्यादेतिन्यायाद्वा॰ घञ् ॥

मादक : । पुं॰ दात्यूहेपक्षिणि ॥ त्रि॰ मत्तताजनके ॥

मादन : । पुं॰ कामदेवे ॥ मदनवृक्षे ॥ धत्तूरे ॥ न॰ लवङ्गे ॥ त्रि॰ हर्षकारयितरि ॥

मादनी । स्त्री॰ भङ्गायाम् । विजयायाम् ॥ माकन्द्याम् ॥

मादृश : । त्रि॰ मत्सदृशे ॥ अहमिव दृश्यते । त्यदादिष्वित्यादिनाकञ् । आसर्वनाम्न : ॥

माद्री । स्त्री॰ अतिविषायाम् ॥ नकुलसहदेवयोर्मातरि । मद्रपुत्र्याम् ॥ भर्गादित्वात्तद्राजस्यनलु-क् ॥

माद्रीपति : । पुं॰ पाण्डुनृपे ॥

माद्रीसुत : । पुं॰ नकुले ॥ सहदेवे ॥

माधव : । पुं॰ विष्णौ । नारायणे । लक्ष्मीपतौ ॥ मधुविद्यायाऽत्रवक्ष्यते॰ इतिमाधव : । शैषिकोऽण् । आदिवृद्धि : गुणाधादेशौ ॥ मायालक्ष्म्या : ॰ विद्यायावा॰ धव : पति : ॥ यद्वा । यदोर्ज्येष्ठ : पुत्रोमधु : ॰ तस्यापत्यं माधवस्तद्वंश्यत्वात् ॥ मधोर्हन्तेतिवा । शैषे॰ कृत्स्न । ॥ माधवत्वात्स्वरूपायामूलप्रकृतिरीश्वरी ।नारायणीतिविख्याता विष्णुमायासनातनी ॥ महालक्ष्मी स्वरूपाचवेदमातासरस्वती राधा वसुन्धरागङ्गातामा स्वामीनमाधव : ॥ मधौ । वसन्ते ॥ राधे । वैशाखे ॥ मधुमकरन्द :॰ सोऽस्मिन्नस्ति । मधोर्श्चेतिञ : ॥ यादवे ॥ मधूकवृक्षे ॥ कृष्णमुद्गे ॥

माधवक : । पुं॰ मधूकपुष्पमद्ये । म

ध्वामवे ॥ मधूकपुष्पंमधु । मधुना क्षत : सञ्चित : । कुलालादिभ्यो- वुञ् ॥

माधवद्रुम : । पुं० आम्रवृक्षे ॥ माधवस्यवसन्तस्यद्रुम :

माधवप्रियम् । न० पीतचन्दने ॥

माधवि : । पुं० प्रद्युम्ने ॥ माधवस्यापत्यम् । अतइञ् ।

माधविका । स्त्री० माधवीलतायाम् ॥ सङ्कृतिछन्दसि २४ प्रभेदे ॥ यथा । भवत्रिपुरोन्नमणायदिसमततोयगणोहितदाकरयन्त : प्रकाममतीवमुदंननुमाधविकामितितांक्षयन्त्वसिसन्त : । तुषारधराधरराजसुतापरिचारकभूमिपतेयमवन्ततमानयमानयतत्समदोसिमदोन्नतगर्वहरस्त्वकमन्त : ॥

माधवी । स्त्री० मिसौ ॥ मधुशर्करायाम् । सिताखण्डे ॥ कुट्टन्याम् ॥ मदिरायाः प्रभेदे ॥ यथा । पीत्वाद्यमाधवीमिष्ठांगातयामिरणाङ्गवे० स्मृतिमङ्गिपंप्रतिदेशैवाक्यंभागवते ॥ गोमहिष्यादिसम्पत्तौ ॥ दुर्गायाम् ॥ तुलस्याम् ॥ सुभद्रायाम् ॥ पुष्पलताविशेषे । अतिमुक्ते । पुण्ड्रके । वासन्त्याम् । लतायाम् ॥ माधवीमधुराशोतालक्ष्वौदोषत्रयापहा ॥ मधौपुष्प्यति । कालात्साधुपुष्प्यत्पच्यमानेष्वितिपुष्प्यर्थेऽ- ण् । ङीप् ॥ उर्व्याम् । भूमौ ॥ त्वय्येयाङ्कंस्वदाधारात्वत्सृष्टात्वामुपाश्रिता । माधवीतिचलोकोयमभिधत्ततोहिमामितिविष्णुपुराणम् ॥

माधवेष्टा । स्त्री० वाराहीकन्दे ॥

माधवोचितम् । न० कक्कोलके ॥

माधवोद्भव : । पुं० राजादन्याम् ॥

माधुक : । पुं० वर्णसङ्करजातिविशेषे ॥

माधुपर्किकम् । न० मधुपर्कदानकाले पूज्यतयावर्ध्येधमादौ ॥

माधुमत : । पुं० काश्मीरदेशे ॥ काश्मीरास्तुमाधुमता: सारस्वतास्तुविकर्णिका: ॥ इतिहेमचन्द्र : ॥ मधुमत्यभिजनोस्य । सिन्धुतक्षशिलादिभ्योण् आदिभ्यण् ॥

माधुरम् । न० मल्लिकायाम् ॥ त्रि० मधुरसम्भवे ॥

माधुरी । स्त्री० मद्ये ॥ माधुर्ये ॥ चित्तंक्षणपदारविन्दरसिकंसामाधुरीमाधुरी ॥

माधुर्य्यम् । न० निसर्गसौम्यत्वे ॥ रामणीयके ॥ रसिकतायाम् ॥ काव्यगुणभेदे ॥ यथा । आल्हादकत्वंमाधुर्यंशृङ्गारेद्रुतिकारणम् । शृङ्गारे० चर्यात्सम्भोगेद्रुतिर्गलितत्वमिव । श्रव्यत्त्वंपुनरोज : प्रसादयोरपि । करुणे विप्रलम्भे तच्छान्तेचातिशयान्वितम् । अत्यन्तद्रुतिहेतु

स्यात् ॥ मधुरस्यभाव : । दृढादित्वा तृष्यञ् ॥

माधूकम् । त्रि॰ मधूकस्यावयवे ॥ त- द्विकारे कोपधाच्चे त्यण् ॥ मधु- रत्नाविधि ॥

माध्यन्दिन : । पुं॰ यजुर्वेदीयशाखा- विशेषाध्यायिनि ॥ त्रि॰ मध्यमे ॥ मध्येभव : । मध्यमध्यन्दिनण्चा- स्मादितिवृत्ति : ॥

माध्यमम् । त्रि॰ मध्यमीये ॥ मध्येभ- वम् । मध्यान्मण्॰इतिवृत्ति : ॥

माध्यमिक : । पुं॰ बौद्धावान्तरभेदेशू- न्यवादिनि ॥ विज्ञानं क्षणिकं ना- त्मास्ति तद्भिन्नमिषवत् । अन्यस्या नुपलब्धत्वाच्छून्यं माध्यमिकाज- गु : ॥

माध्यस्थम् । न॰ मध्यस्थत्वे ॥ यत्रै गुण्यात्पुरुषस्यमाध्यस्थ्यम् ॥ मध्य स्थस्यभाव : । ष्यञ् ॥ मध्यस्थक- र्मणि ॥

माध्याह्निक : । पुं॰ अस्यूकौ । त्रि॰ मध्याह्नभवे ॥ ठञ् ॥

माध्वकम् । न॰ माध्वीके ।

माध्वी । स्त्री॰ मद्ये ॥ मध्वादिकृत- सुरायाम् । मधुरकर्कटकमद्ये ॥

माध्वीकम् । न॰ मधूकपुष्पै : कृते- मद्ये । मध्वासवे । माधवके ॥ मृ द्वीका॰द्राक्षा॰तस्याविकार : । त- स्यविकारइत्यण् । अनुदात्तादेश्चे- त्यञ् वा । पृषोदरादि : ॥ मधुन: प्रभेदे ॥

माध्वीकफल : । पुं॰ मधुनारिकेरके ॥

माध्वीमधुरा । स्त्री॰ मधुखर्जूरिका- यां ॥

मान : । पुं॰ चित्तसमुन्नतौ ॥ चित्त स्यसमुन्नतिरुद्धतामान : । धना- द्युत्कर्षेणात्मनिचित्तोन्नतिर्मान : । मत्समोनान्योस्तीतिमननंमान : ॥ गर्वे । अपूज्यत्वे पिपूज्यत्वख्या पने । आत्मनिपूज्यत्वाध्यासे ॥ पूज्यत्वे ॥ यथा । अधमा : क- लिमिच्छन्तिसन्धिमिच्छन्तिमध्यमा: । उत्तमामानमिच्छन्तिमानोहिम- हतांधनम् ॥ मानोहिमूलमर्थस्यमा नेम्लानेधनेनकिम् । प्रभ्रष्टमानदर्प स्यकिंधनेनकिमायुषा । सत्कारे । आत्मन्यविद्यमानगुणारोपिलोत्कर्ष वृत्तौ ॥ प्रत्युत्थानाभिवादनादौ ॥ गुणवतिनिर्गुणत्वधीरूपस्यापि मानेन्तर्भवति ॥ ग्रहे ॥ आदरे । मन्यासे । कोपविशेषे ॥ स्त्रीणामी र्ष्याकृत : कोपोमानोन्यासङ्गि- नि प्रिये । प्रियापराधसूचिकाचे- ष्टामान : ॥ अनुरक्तयोर्दम्पत्योर्भा वविशेषे । यथा । दम्पत्योर्भावए कवसतोरप्यनुरक्तयो : । स्वाभीष्टा श्लेषवीक्षादिनिरोधोमानउच्यते ॥ न॰ प्रमाणे । प्रस्थघादौ ॥ अवुल

षोकोऽस्य ॥

मानाथ : । पुं॰ लक्ष्मीकान्ते । नारायणे ॥

मानार्थकम् । न॰ यौतवे ॥ मानमर्थोयस्यतत् ॥

मानास : । त्रि॰ पराहङ्कारहारिणि ॥ मानमस्यति । असु॰ । कर्म्मण्यण् ॥

मानिका । स्त्री॰ मद्ये ॥ शरावे । सेर॰ इतिभाषा ॥ इतिवैद्यकपरिभाषा ।

मानित : त्रि॰ पूजिते ॥ मान : सञ्जातोऽस्य । तारकादित्वादितच् ॥

मानिता । स्त्री॰ अभिमानितायाम् । मानिनोभाव : । तल् ॥

मानित्वम् । न॰ विद्यमानैरविद्यमानैर्वागुणैरात्मन : श्लाघने ॥ भावेत्व : ॥

मानी । पुं॰ सिंहे ॥ त्रि॰ मानविशिष्टे ॥ अहङ्कारिणि ॥ मननशीले । मानास्यास्ति॰ अस्मिन्वा । इनि : । अनात्मवस्तुष्वात्माभिमानोमान : । सोऽस्यास्तीतिमानी । ॥

मानिनी । स्त्री॰ फल्याम् । प्रियङ्गौ ॥ मानवत्याम् । स्त्रीविशेषे ॥ उक्तमयोषिति । मानश्चित्तोन्नतिरस्त्यस्या : । इनि : । ङीप् । कोपनायाम् ॥ स्त्रीणामीर्ष्याकृत : कोपो

, मानोन्यासङ्गिनिप्रिये॰ इतिलक्षणात् ॥

मानिषाद : । पुं॰ श्रीरामे ॥ मा॰ लक्ष्मीरस्मिन्विष्णौनिषीदति॰ तिष्ठति । षद्लृ॰ । इलश्चेतिघञ् । सदिरप्रतेरितिषत्वम् ॥

मानुष : । पुं॰ मनुष्ये ॥ मनोरपत्यम् । मनोर्जातावञ्यतौषुक्च ॥ आसुरविवाहे ॥ शुल्केनासुरइति हारीतसूत्रात् ॥ त्रि॰ मनुष्यसम्बन्धिनि ॥ मनुष्यस्यायम् । तस्येदमित्यण् । आपत्यस्येतियलोप : ॥ यैऽव्धामन्दमतयोविधिनाम्वितायये । तेप्राप्यमानुषंजन्मपुनर्यान्तिविशल्यताम् ॥

मानुषतीर्थम् । न॰ तीर्थविशेषे ॥

मानुषविभाव् । पुं॰ शरीरपाटवे ॥ गोभूहिरण्यादिसाधनसम्पत्तौ ॥ मानुषस्यविभव : ॥

मानुषी । स्त्री॰ नरभार्यायाम् ॥ मनोरपत्यंस्त्री । मनोर्जातावञ्यतौषुक्च । टिड्ढेतिङीप् ॥ जातिविवक्षायांपरत्वान्ङीन् ॥ पुंयोगेतुङीष् ॥ चिकित्साप्रभेदे ॥ यथा आसुरीमानुषीदैवीचिकित्सामात्रिधामता ॥

मानुष्य: । पुं॰ त्रिविधभौतिकसर्गे ॥ सचैकविध: ॰ ब्राह्मणाद्यवान्तरजातिभेदाविवक्षया॰ संस्थानस्य

यंमहजाधवा महजाऽनादि: • घ ायाबन्धीचास्यायिनीमायाशक्ति र्ममास्तीत्यर्थ: । एतेन मायाशक्त्या सद्वितीयत्त्वंब्रह्मणोस्तीति• कथंजगत्सृष्ट :पूर्वंब्रह्मसजातीयभेदशून्य मितिशङ्कापरास्ता• शक्ते : शक्तानतिरेकात्• नहिवह्निशक्तिर्वह्ने : पृथक्त्त्वेन• क्वचित्कदाचि दृश्यते । किञ्चद्वितीय: सत्यपदार्थीनास्तीत्य वैकमेवाद्वितीयंब्रह्मेति श्रुतेरर्थ : । तथाचासत्यामाययामद्वितीयत्वं पिदोषाभावात्• इति ॥ विश्वं मात्यस्याम्• मिमीतेवा । मामाने• माङ् मानेवा । माच्छा समिभ्योय: । मांयातिवा । यातो नुपेतिक : ॥ वर्णवृत्तान्तरे ॥ तल्ल क्षणम् कन्याकर्णौकुण्डलयुक्तौकु रुतंदत्त्वापादनृपयुक्तंकुचहारम् । मायावृत्तंपिङ्गलनागोदितमेतज् जानीताऽद्य : पण्डितवक्त्रस्युजसा रम् ॥ यथा । उद्यद्वावासम्प्रतिराधामधुमासे• शङ्के सङ्के । तत्प्रतियाताकिमुदासि । कलीकुञ्जं शून्यम पेक्ष्यास्तरहस्याप्राणत्राणं भाविकथं वावदतस्या : ॥

मायाकार :। त्रि• ऐन्द्रजालिके । प्रातिहारिके । मायां• स्थलजला दौजलस्थलादिज्ञानंकरोति । कृञ अ• । कर्म्मण्यण् ।

मायाकृत् । पुं• मायाकारे । प्राति हारिके ॥

मायाजीवी । पुं• प्रातिहारिके । वाजीकर इ• भा• प्रसिद्धे ॥

मायाति :। पुं• नरवले ।

मायाद :। पुं• कुम्भीरे ॥

मायादेवी । स्त्री• शाक्यमुनेर्जनन्याम् ॥

मायादेवीसुत :। पुं• शाक्यमुनौ । शाक्यसिंहे । गौतमे । अर्कबन्धौ । बुद्धभेदे ॥ मायाचासौदेवीच । तस्या : सुत : ॥

मायाधमन :। पुं• मायाधमने• भगवति ॥

मायाफलम् । न• फलविशेषे । छिद्राफले । मायफले । माजूफल• इ• गौ• भा• ॥

मायामय :। त्रि• मायाविनाकृते ॥ न• जगति ॥ ननिरूपयितुं शक्या विस्पष्टं भासतेचया । सामायेती न्द्रजालादौलोका: सम्प्रतिपेदिरे ॥ स्पष्टं भातिजगच्चेदमशक्यंतन्निरूपणम् । मायामयंजगत्तस्मादीक्ष स्वापक्षपातत : ॥

मायामोह :। पुं• अर्हद्धर्म्मप्रवर्त्तके• भगवदंशेऽसुराणांमोहायोत्पन्ने ॥

मायारसिक :। त्रि• परप्रतारके ॥ मायायांरसिक : ॥

मायावान् । त्रि• मायासंयुक्ते । मा

यात्विनि ॥ मायास्यस्याम्मिन्वाम तुप् ॥
मायावती। स्त्री॰ कामदेवपत्न्याम्। रत्याम् ॥ उगित्त्वान्ङीप् ॥
मायावी। पुं॰ कंसासुरे बिडाले ॥ त्रि॰ मायाकारे। व्यंसके। ऐन्द्रजालिके ॥ मायास्यास्ति॰ अस्मिन्वा। अस्मायामेधास्रजोविनि: ॥
मायाविनोद:। पुं॰ दैत्यदानवादौ ॥ मायायामायायांवाविनोदश्चमत्कारविशेष: क्रीडावायस्ये तिविग्रह: ॥
मायाशक्ति:। स्त्री॰ आवरण विक्षेप शक्तिसम्पन्नायाम् ॥
मायासीता। स्त्री॰ योगेमाग्निकृत सीताप्रकृतौ।
मायासुत:। पुं॰ बुद्धे ॥ मायाया: सुत: ॥
मायिक:। पुं॰ मायाकारे ॥ मायास्त्यस्य। व्रीह्यादिपाठाट्ठन् ॥ न॰ मायाफले ॥ त्रि॰ मृषात्मके ॥
मायी। पुं॰ मायाकारे। धूर्त्ते। जालिके ॥ मायाविनि। मायाशक्तिमति॰ महेश्वरे। मायाया: प्रकृतेर्नियामके ॥ मायान्तुप्रकृतिंविद्यान्मायिनन्तुमहेश्वरम्। समाप्यस्य जगत्याहु: स्वे ताप्रवतरशाखिम: ॥ मायास्य॰ अस्मिन्वाअस्ति। व्रीह्यादिपाठादिनि: ॥
मायु:। पुं॰ पित्ते ॥ मिनोति॰ प्रक्षिपतिदेहेऊष्माणम्। डुमिञ्प्रक्षेपणे। कृवापाजिमीत्य्युण् ॥
मायुराज:। पुं॰ कुबेरात्मजे। यथा कवौ ॥
मायूरम्। न॰ मयूरसमूहे॰ मयूराणां समूह:। अनुदात्तादेरञ् ॥ मयूरमांसे ॥ मयूरस्यावयवोविकारोवा। प्राणिरजतादिभ्योञ् ॥ मायूरंपाचितंमांसंघृतेचोपस्करान्वितम्। ईषल्लवणसंयुक्तंमरिचैलासमन्वितम् ॥ कषायमुष्णंमायूरंकफानिलहरंगुरु। वर्षाकालेनतत्सेव्यंदुष्टकीटादिभक्षणात् ॥
मायूरिक:। पुं॰ मयूरव्याधिशाकुनिके ॥ मयूरान्हन्तिपक्षिमत्स्यमृगान्हन्तीतिठक् ॥
मायूरी। स्त्री॰ अजमोदायाम् ॥
मार:। पुं॰ अनङ्गे। स्मरे ॥ मारयति॰विरहिणम्। पचाद्यच् ॥ मृतौ ॥ विघ्ने ॥ धत्तूरे ॥ मारणे ॥ म्रियतेऽनेन। मृङ्॰। करणेघञ् ॥
मारक:। पुं॰ मरके। उत्पाते। पक्षिविशेषे। घातपक्षिणि। वाज॰इ॰भा॰ ॥ त्रि॰मारणकर्त्तरि ॥
मारजित्। पुं॰ जिने। बुद्धे ॥ मारंकामंजयति। जि॰, सत्सूद्विषेति क्विप्। तुक् ॥
मारणम्। न॰ प्रतिघातने। वधे।

व्याअन्यथानहि ॥ इतिदेवीपुराणे त्रैलोक्याभ्युदयेगोपुरद्वारलक्षणाध्यायः ॥ मृगशिरायुक्तापौर्णमासी मार्गी०साऽस्मिन्नस्ति। अण् ॥ मृज्यते विहर्णीक्रियते पादैः। मृजशुद्धौ। मार्ग्यतेवा। मृगअन्वेषणे। घञ् ॥ मार्गोद्विजोङ्गलानूपाट विक्रविषयर्भ देश्चिविधोत्तेयः ॥ सम्प्रदाये ॥ त्रि० मृगसम्बन्धिनि ॥

मार्गकः। पुं० आग्रहायणे।

मार्गणः। पुं० शरे। न० अन्वेषणे। संवीक्षणे। याञ्चायाम्। याचने ॥ त्रि० अर्थिनि। याचके ॥ मार्गअन्वेषणे। बहुलमन्यत्रापीतियुच् ॥ मार्ग० ल्युट् ॥ मार्गयति। मार्ग्यतेवा। ल्युःकृत्यल्युट इतिल्युड्वा ॥

मार्गणकः। पुं० याचके ॥

मार्गधेनुः। पुं० )

मार्गधेनुकम्। न० ) योजनपरिमाणे।

मार्गवः। निषादाद्वायोगव्यामुत्पन्ने दाशापरनामनि ॥ निषादोमार्गवंसूतेदाशंनौकर्मजीविनम् कैवर्त्तमितियंप्राहुरार्यावर्त्तनिवासिनः ॥

मार्गशिरः। पुं० मार्गमासि ॥

मार्गशीर्षः। पुं० महसि। मार्गे। आग्रहायणिके। मंगसिर० इ० भा० ॥ द्वादशमासानामर्थ्य० अभिनवशालिवास्तुकशाकादिशाली० शीतातपशून्यत्वं नचसुखहेतुः मार्गशीर्षोभगवद्विभूतिः। मासानांमार्गशीर्षोहमितिभगवद्वचनात् ॥ अत्रजातस्यफलंयथा। यस्यप्रसूतिःखलुमार्गमासितीर्थप्रवासीसततंमतिःस्यात्। परोपकारीधृतसाधुवृत्तिःसद्वृत्तियुक्तोललनाभिलाषी। मृगशिरसायुक्तापौर्णमासी। नक्षत्रेणयुक्तःकालइत्यण्। ततो ङीप्। मार्गशीर्षीपौर्णमासीत्यण् ॥ त्रि० मृगशिरसिजाते ॥ सन्धिवेलेत्यण् ॥

मार्गिकः। पुं० व्याधे। मृगहन्तरि मृगान्हन्ति। पक्षिमत्स्येतिठक्।

मार्गितः। त्रि० अन्वेषिते ॥ मार्ग्यतेस्म। म०। क्तः ॥

मार्गीवीथी। स्त्री० दक्षिणमार्गेनक्षत्रविशेषाणांसंज्ञाविशेषे ॥ यथा। श्रवणश्चधनिष्ठाचमार्गीति ॥

मार्जः। पुं० विष्णौ ॥ वस्त्रादिनिर्मलीकरणे। मार्जने। रजके ॥

मार्जनः। पुं० लोध्रवृक्षे। न० प्रोक्षणादिनाऽङ्गनिर्मलीकरणे। मार्ष्टी। मांजना० इ० भा० ॥ स्नानकालेशरीरमार्जनगुणाः। यथा।

मार्जित : । त्रि० कृतमार्जने । मृ-जे : क्त : ॥

मार्जिता । स्त्री० रसालायाम् । शि-खरिण्याम् । त्रि० शोधिते ॥ मा-र्ज्य तेऽसौ । मृजूशौचालङ्कारयो : । क्त : । टाप् ॥

मार्त्तण्ड : । पुं० तरणौ । सूर्ये ॥ मृताण्डेभव : । अणन्त्वादि : ॥ क्रोडे । शूकरे ॥

मार्त्तण्डवल्लभा । स्त्री० सूर्यपत्न्याम् । आदित्यभक्तायाम् ॥

मार्त्ताण्ड : । पुं० सूर्ये । मृताण्डेभ-व : । अण् ॥ क्रोडे । भूदारे ॥

मार्त्तिक : । पुं० शरावे ॥ त्रि० मृ-त्तिकारचिते । मृत्तिकायाविकार: । तस्यविकारइत्यण् ॥

मार्द्दङ्गम् । न० पत्तने ॥

मार्द्दङ्गिक : । त्रि० मौरजिके । मृदङ्ग वादके । मृदङ्गवादनशिल्पमस्य । शिल्पमितिठक् । अत्र० मृदङ्ग वादने० प्रकृतिलक्षणा । मुख्यार्थ वृत्तिस्त्वनभिधानात् ॥

मार्द्दव : । पुं० वर्णसङ्करजातिवि शेषे ॥ न० मृदुतायाम् । परदु:ख प्रदर्शनात्पीडाबुद्धौ ॥ अक्रूरत्वे । तथापूर्वपद्माद्दिकारिष्वपिशिष्यादि षु० अप्रियभाषणादिव्यतिरेकेणवो धयितृत्वे । चित्ताकाठिन्ये । मृ-दोर्भाव : । युगन्तश्चेत्यण् ।

मार्द्वीकम् । न० मधुनि । द्राक्षाम-द्ये ॥ मृद्वीकाद्राक्षा० तस्याविकार: । तस्यविकारइत्यण् ॥ अनुदात्तादे-श्चेत्यञ् वा ।

मार्ष : । पुं० मारिषशाके ॥ नाट्यो क्त्यायार्ये ॥ मर्षणात्सहनात्० मा र्ष : ॥

मार्षिका : । पुं० मारिषशाके ॥

मार्ष्टि : । स्त्री० प्रोञ्छनादिनाद्रव्य-निर्मलीकृतौ । मार्जनायाम् ॥ मा र्जनम् । मृजूशुद्धौ । मृजूशौचाल ङ्करणयोर्वा० चुरादि: । क्तिन् । टि तुत्वे तिनेट् । णिलोप : ॥

माल : । पुं० उन्नतभूतले० क्षेत्रे । स्त्रेच्छजातिविशेषे ॥ यथा । मा-लाभिल्ला : किरातास्तु सर्वेऽपिम्ले-च्छजातय : ॥ देशविशेषे ॥ सच० मेदिनीपुरप्रदेशे मालभूमिस्त्वेनख्या त: ॥ न० कपटे ॥ वने ॥ उन्नतभू-तले ॥ क्षेत्रे । माति । मामाने । स्त्रीन्द्रायवज्ञविप्रक्षुत्रपुत्रच्छ रखुर भद्रोग्रभेरभेलशुक्रशुक्लगौरवन्ने रा-माला : । इतिरन् । निपातनाल्ल त्वम् ॥

मालक : । पुं० निम्बवृक्षे । मल्लते । मल्लधारणे । अलुल् ॥ न० स्थल पद्मे ॥

मालका । स्त्री० माल्ये ॥

मालकौश : । पुं० कौशिके । रागवि

भेदे । अस्यगानसमयोरात्रिशे
ष : ॥

मालचक्रकम् । न० सक्थ्य रूपर्वसन्धौ
। मालाचूचाकि० ह० गौ० भा०।

मालतिका । स्त्री० वृत्तविशेषे ॥ यथा
। चादिगुरु: पुनरन्त्यगुरुर्यदिचान्त
रगा : सगणामुनिमाना : मालति
काकथितावि बुधसम्मतिभिर्विदित
श्रुतिभि : क्रममाना । गौडकुल
मधुरस्वरदीनदयाकरसत्वविभि :
कृतगानाश्रीयशवन्तनरेशनिशा
मपशामयमानवदानविधाना । मा
लत्यै वम : ॥

मालती । स्त्री० युवती ॥ काचमाच्या
म् । विशल्यायाम् ॥ ज्योत्स्नाया
म् ॥ निशि ॥ नदीविशेषे ॥ जा
त्याम् । चंबेली० ह० प्रसिद्धायां
पुष्पलतायाम् ॥ वर्णवृत्तान्तरे ॥
चादौचत्वारोद्यांकर्णाजायन्ते शेषे
यत्रारामस्तारारराजन्ते । रुद्रैर्वर्णैः
पादेपादेविख्यातामालत्यै षावाणी
भूषाविख्याता ॥ यथा । यायाम्मा
यामीमोलीन : कल्याणे प्रागादि
शोणीभर्तु : पार्थिवेन्द्रो । व्याया
म् भोधे तस्मिन्कालेलीलाभि : स
म्यक् सर्वौषध्योयत्पृष्ठे तिष्ठन् ॥
जगतीछन्दोभेदेपि ॥ तल्लक्षणं
यथा । भवतिननावथमालतीजरौ
॥ यथा । इन्दुकलयाच्युतकेलिका
नवमधुरसमीरमन्दारलोलुप : ।
कुसुमकृतस्मितचारुविभ्रमामलिर
पिचुंबतिमालतींमुहु : ॥ मालति
कान्छन्दसि ॥ मालत्यांलतति ।
लति : सौत्रोवंधनार्थ : । मूलवि
भुजादित्वात्क : । गौरादि : ॥

मालांललीतिवा । लनु० । पञ्चेभ्यो
पीतिड : ॥

मालतीतीरज: । पुं० टङ्कणे । सुहा
गा० ह० भा० ॥

मालतीतीरसम्भवम् । न० स्वर्णटङ्क
णे ॥

मालतीपत्रिका । स्त्री० जातीपत्र्या
म् ॥

मालतीफलम् । न० जातीफले ॥

मालय : । पुं० चन्दनवृक्षे ॥ त्रि०
मलयसम्बन्धिनि ॥ न० पद्मे ॥

मालव : । पुं० अवन्तिदेशे । माल
वा० ह० भा० ॥ अयन्तोत : पूर्व
भागे गोदावर्यास्तथोत्तरे । माल
वाख्योमहादेशोधनधान्यपरायण :
॥ रागविशेषे ॥

मालविका । स्त्री० निवृति ।

मालसी । स्त्री० केशपृष्ठभे । माला
ख्याम् ॥ रागिणीविशेषे । मालव
रागस्यपत्न्याम् ॥ मतान्तरे श्रीमेघ
रागस्यभार्यायाम् ॥ अस्यागानसम
यो यथा । इन्द्रोत्थानात् समारभ्य
यावद्दर्गामहोत्सवम् । गेयाभवेद्

यादृबह्र॰भा॰ ॥

मालाधर : । पुं॰ वर्णवृत्तविशेषे ॥ द्विजवरगणान्वितोगजपति : पुनस्तूर्यवाम् ॰करतलपरिस्फुरत्कमककुण्डलेनान्वित : । सुरपतिगुरुश्रियापरिगत: समंतात्सखे ॰जयतिभुविवत्तभूपतिरयन्तुमालाधर : ॥ यथा । क्वचिदपिवयस्ययासरविनोदमातन्वती॰ कतिपयक्कथारसैर्मयतिवासरीयांरुजम् । सुभगतवकामिनीसमधिगम्यसायामिनी मनुभवतिभामिनी मदनवेदना मत्त : ॥

मालारिष्टा । स्त्री॰ पाठ्याम् । मरकतपत्र्याम् । हरितलतायाम् ॥

मालालिका । स्त्री॰ पृक्कायाम् ॥

मालाली । स्त्री॰ पृक्कायाम् ॥

मालि : । पुं॰ सुकेशराक्षसपुत्रे ॥

मालिक : । पुं॰ मालाकारे ॥ पक्षिविशेषे ॥ मालाशिल्पमस्य । शिल्पमितिठक् ॥ मालास्यास्तिवा । व्रीह्यादिभ्यश्चेतिठन् ॥

मालिका । स्त्री॰ सप्तलायाम् ॥ पुत्र्याम् ॥ ग्रीवालङ्कारणे ॥ पुष्पमाल्ये ॥ नदीविशेषे ॥ सुरायाम् । मद्ये ॥ टाप् ॥

मालिकी । स्त्री॰ मालिकयोषिति । मालिन्॰ इ॰ भा॰ ॥ टिड्ढेति ङीप् ॥

माली । पुं॰ मालावति ॥ मालास्त्यस्य । सुखादिषु॰मालाक्षेपे॰इतिपाठादिनि : ॥ व्रीह्यादित्वाद्वा॰इनि: । सतुषेपादन्यत्रापि ॥ सुकेशराक्षसपुत्रे ॥

मालिनी । स्त्री॰ मातृकायाम् ॥ मालिकयोषिति ॥ गौर्याम् । उमायाम् ॥ चम्पानगर्याम् ॥ मन्दाकिन्याम् ॥ नदीविशेषे ॥ मालाअस्तिअस्या : अस्यांवा । व्रीह्यादित्वादिनि : । ङीप् ॥ यद्वा । मलते । मलधारणे । णिनि : । ङीप् ॥ अग्निशिखायाम् ॥ दुरालभायाम् ॥ अतिशक्वरीच्छन्दो १५ भेदे ॥ यथा । ननमयययुतेयंमालिनीभोगिलोकै : ॥ रुगसदकृतचर्चापीतकौशेयवासारुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा । अनृजुनिहितमंसेवंशमुत्क्वाणयन्तीधृतमधुरिपुलीलामालिनीपातुराधा ॥

मालिन्यम् । न॰ मलिनत्वे ॥

मालाय : । त्रि॰ मालायाम्भवे ॥ वृद्धाच्छ : ॥

मालु : । स्त्री॰ पत्रलतायाम् । पत्रवल्ल्याम् ॥ नार्याम् ॥

मालुधान: । पुं॰ मातुलाहौ । चित्रसर्पे ॥ मालुरोषधी॰तत्रधानमस्य ॥ महापद्मे ॥

मालुधानी । स्त्री॰ लतान्तरे ॥

मालूक : । पुं० कृष्णार्जके ॥

मालूर : । पुं० शाखोटवृक्षे । श्री फले । विल्वे । वेल० इ० भा० ॥ मालक्ष्मींपरेषांलुनाति । लूञ्छेदने । बाहुलकादूरक् ॥ कपित्थवृक्षे ॥

मालेया । स्त्री० स्थूलैलायाम् ॥

माल्यम् । न० कुसुमे । पुष्पे ॥ मालायांसाधुमाल्यं पुष्पमितिविवरणम् यथा । यथाचाल्येनमाल्येनवासितंतिलसर्षपम् । नमुञ्चतिस्वकंगन्धं तद्वत्सूक्ष्मस्यदर्शनम् ॥ पुष्पमालायाम् ॥ मूर्ध्निन्यस्तपुष्पदामनि ॥ केशकलापार्हैर्माल्यधारणनिषेधोयथा । नविगर्ह्यकथांकुर्याद्वहिर्माल्यंनधारयेत् । गवाञ्चयानंपृष्ठेनसर्वथैवविगर्हितम् ॥ रत्नमयस्रजि ॥ मालामाचे ॥ मल्यते । मल धारणे कर्त्तलोग्यत् ॥ यद्वा । मालेव । चतुर्वर्णादित्वात्ष्यञ् ।

माल्यपुष्प : । पुं० शणवृक्षे ॥

माल्यपुष्पिका । स्त्री० शणपुष्प्याम् ॥

माल्यवान् । पुं० पर्वतविशेषे । मेरुत : प्राच्यामानीलनिषधयाम्योत्तरायते द्विसहस्रयोजनविस्तीर्णेकेतुमालेलावृत्तवर्षयोर्मर्यादाद्रौ ॥ माल्याकारतास्त्यस्मिन्मतुप् ॥ राक्षसभेदे ॥

माष : । पुं० वैटात्तीवरकन्यायामुत्पन्ने० सङ्करजातौ ॥

माषवी । स्त्री० मषयाषायाम् ॥

माशब्दिक : । त्रि० प्रतिषेधकारि । निषेधके ॥ माशब्द : इतियआहस : । तदाहेतिमाशब्दादिभ्यउपसङ्ख्यानमितिठक् ॥

माष : । पुं० व्रीहिप्रभेदे । कुरुविन्दे । धान्यवीरे । वृषाकरे । मांसले । बलाढ्ये । पित्ये । भोजने । माष०उडद० इ० भा० ॥ माषस्यफलंमाष : । अवयवेचप्राण्योषधिवृक्षेभ्यइत्यण् । तस्यफलपाकशुषामिति लुपि०युक्तवद्भाव : ॥ माषोगुरु : स्वादुपाक : स्निग्धोरुच्योऽनिलापह : । उष्ण : सन्तर्पणोबल्य : शुक्रलोद्वृंहण : पर : ॥ भिन्नमूत्रमलस्तन्यमेद : पित्तकफप्रद : । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ॥ कफपित्तकरामाषा : कफपित्तकरंदधि । कफपित्तकरामत्स्या कुम्भाण्डंकफपित्तकृत् ॥ मूलकंमाषसूपेनमधुनाचनभक्षयेत् ॥ रूप्यपरिमाणविशेषे ॥ द्विकृष्णलेसमधृते विज्ञेयोरूप्यमाषक : ॥ परिमाणविशेषे । माषके ॥ सचमागधमानेसुश्रुतमते ५ गुञ्जाचरकमते ६ ८ गुञ्जापरिमाणम् । कालिङ्गमानेसुश्रुतमते ५ ७ ८ गुञ्जापरिमाणम् । वै

द्यकान्तरे १० गुञ्जापरिमाणम् ॥ यथा । गुञ्जाभिर्दशभिर्माषः शाणो माषचतुष्टयमितिवैद्यकपरिभाषा । मासाइति भाषा॥ ज्योतिःस्मृतिमते १२ गुञ्जापरिमाणम् । यथा । पलन्तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम् । तोलकन्त्रितयं च यं ज्योतिश्चैः स्मृतिसम्मतमितिनिष्ठ्यादितत्त्वधृतवचनेनपलमष्टरक्तिकाधिकमाषद्वयाधिकतोलकत्रयम् । एतेनमाषकपरिमाणंद्वादशरक्तिकंभवति ॥ मूर्खे ॥ त्वग्दोषभेदे । मस्साइति भाषा ॥

माषक : । पुं० पञ्चरक्तिकपरिमाणे ॥ गुञ्जाः पंचाद्यमाषकइत्यमरः ॥ दशार्द्धगुञ्जंप्रवदन्तिमाषंमाषाह्वयैः षोडशभिश्चकर्षमितिलीलावतीच ॥ षड्भिस्तुरक्तिकाभिः स्यान्माषकोहेमधान्यकौ । माषोगुञ्जाभिरष्टाभिः सप्तभिर्वाभवेत्क्वचिदितिभावप्रकाशः ॥

माषपर्णी । स्त्री० महासहायाम् । हयपुच्छौषधौ । काम्बोज्याम् । वनमाषे । माषाणीति० गौ०दे०भा० ॥ माषपर्णीहिमातिक्ताक्रुत्सा शुक्रवलासकृत् । मधुराग्राहिणीशोषावातपित्तज्वरास्रजित् ॥

माषवर्द्धक : । पुं० स्वर्णकारे ॥

माषवटी स्त्री० वटिकाविशेषे । उड़दी० बड़ी० इ० भा० ॥ माषाणांपिष्टिकाहिङ्गुलवणाद्रकसंस्कृता । तयाविरचितावस्त्रेवटिकासाधुशोषिता : ॥ तलितास्तप्ततैलेता अथवासुप्रलेहिता : । वटकस्यगुणैर्युक्तास्तात्व्यारुचिदाभृशम् ॥

माषश : । अ० प्रतिमाषम्० इत्यर्थे ॥

माषाद : । पुं० कच्छपे ॥ त्रि० माषभक्षके ।

माषादि : । पुं० शमीधान्यगणे । माषआदिर्यस्यगणविशेषस्यसः । माषोमुद्गोराजमाषः कुलत्थश्चणकस्तिलः । काकाणडश्चैवरइतिशमीधान्यगणः स्मृतः ॥

माषीणम् । न० माषक्षेत्रे । मांष्यं॥ माषाणांभवनंक्षेत्रम् । विभाषातिलमाषोमाभङ्गाणुभ्यइतिपक्षे खञ् ॥

माषेगडरी । स्त्री० इगडरे० इन्दरे० सो फा० इतिहिमपर्वतप्रसिद्धखाद्यद्रव्ये ॥

माष्यम् । न० माषीणे । माषक्षेत्रे ॥ माषाणांभवनम्क्षेत्रम् । विभाषातिलमाषेतिपक्षे यत् । माषेभ्योहितंवा । खलयवमाषेत्यादिना यत् ॥

मा : । पुं० चन्द्रे ॥ मासे ॥ मिमीते आनन्दमितिमा : । बाहुलकात्कि

बलादप्यसि : ॥

मास : । पुं० प्रामे । बर्षांशे । शुक्लकृष्णपक्षद्वयात्मकेकाले ॥ मासोद्विविध : शुक्लादि : कृष्णादिश्च । तत्र चैत्रशुक्लप्रतिपदमारभ्यामावास्यापर्य्यन्तंशुक्लादि :। कृष्णपक्षप्रतिपदमारभ्यपूर्णिमापर्य्यन्तंकृष्णादि : ॥ माश्चन्द्रस्तस्यायम् । अण् । सौरादिषु । यथा । मासश्चतुर्विधः प्रोक्त : सावनादिप्रभेदत: । त्रिंशद्दिनात्मकस्तत्रसावन : परिकीर्त्तित : ॥ एकस्मात्सङ्क्रमादासङ्क्रान्ति: सौरोभिधीयते । शुक्लपक्षादिकृष्णान्तश्चान्द्र : स्यादन्यथापिवा ॥ सर्वनक्षत्रभुक्त्यातुमासश्चोमासउच्यते ॥ तत्र । आब्दिकेपितृकृत्येचमासश्चान्द्रमस: स्मृत: । विवाहादौस्मृत: सौरोयज्ञादौसावनोमतइतिविवेक : ॥ मस्यते परिमीयते चन्द्रवृद्धिचयाभ्यांय: । मसीपरिणामे । कर्म्मणिघञ् ॥

मासजात : । त्रि० जननादूर्द्ध्वंयस्यमासोगतस्तत्र ॥ तत्रैवव्यवहारात् । मासोजातस्ययस्यस : । काला : परिमाणिनेतिसमास : ॥

मासज्ञ: । पुं० दात्यूहे ॥ त्रि० मासविदि ॥

मासतम : । पुं० मासस्यपूरणे ॥ नित्यंशतादीतिडटस्तमडागम : । अतएवस्थापकाट्डट् ॥

मासनम् । न० सोमराज्याम् ॥

मासमान : । पुं० वत्सरे ॥ न० मासपरिमाणे ॥

मासर : । पुं० निस्रावे । भक्तसमुद्भवे मण्डे । मांड० पीच० इ० भा० ॥ मासते । मसीपरिणामे० बाहुलकादरन् ॥ यद्वा । मा० श्री : सरस्य च । स० । पुंसीतिघ : ।

मासवर्त्तिका स्त्री० सर्षपौषधिविशेषे ॥

मासान्त : । पुं० अमावास्यायाम् ॥ संक्रान्तिदिने ॥

मासिकम् । न० अन्वाहार्य्ये । दर्शश्राद्धे ॥ पितॄणांमासिकंश्राद्धमन्वाहार्य्यंविदुर्बुधा : । तच्चामिषेणकर्त्तव्यंप्रशस्तेनप्रयत्नत : ॥ मासे भवम् । कालाट्ठञ् ॥ प्रेतस्य० संवत्सराभ्यन्तरे० प्रतिमासंमृताहेक्रियमाणेश्राद्धे ॥ मासोदेवताऽस्यवा । कालेभ्योभववत् ॥ स्त्र्यण् ॥ मासेदेयं । देयमृणे । ठञ् ॥ त्रि० माससम्बन्धिनि । मासेननिर्वृत्तम् । ठञ् ॥ मासेभवंवा ॥

मासुरी । स्त्री० श्मश्रौ ॥

मासूर : । त्रि० मसूरविकृतौ ॥ मसूरस्यावयवोविकारोवा । बिल्वाद्यण् ॥

मास्म । अ० अलम् । वारणे ॥ माचस्मच । अनयो : समाहार : ॥

माहाकुल : । त्रि॰ महाकुलीने ॥ महाकुलस्यापत्यम् । महाकुलादञ् खञावितिपत्ने ञ् ॥

माहाकुलीन : । त्रि॰ महाकुले ॥ महाकुलस्यापत्यम् । महाकुलादितिपक्षेखञ् ॥

माहाजनिक : । त्रि॰ महाजनायहिते ॥ महांश्चासौजनश्च । महाजनाट्ठञ् ॥ बहुव्रीहिस्तु । महाजनीय: ॥

माहात्म्यम् । न॰ महात्मत्वे ॥ प्रभावे ॥ महात्मनोभाव: । ष्यञ् ॥ अनतिशयैश्वर्य । विश्वसृष्ट्यादिकर्तृत्वेऽप्यविकारित्वे । शुभाशुभकर्मकारयितृत्वेऽप्यवैषम्ये । बन्धमोक्षादिफलदातृत्वेऽप्यसङ्गौदासीन्ये ॥

माहाराजिक : । पुं॰ गणदेवताभेदे ॥ महाराजोदेवतैषाम् । महाराजप्रोष्ठपदाट्ठञिति॰ठञ् ॥ महाराजोभक्तिरस्यवा । महाराजाट्ठञ् ॥

माहाव्रती । स्त्री॰ पाशुपतव्रतसम्बन्धिन्यांपद्धतौ ॥

माहिनम् । न॰ राज्ये ॥ मह्यतेऽस्मिन् । मह॰ महेरिनण्चेत्यौनण् ॥ त्रि॰महनीये ॥

माहिर : । पुं॰ देवराजे । इन्द्रे ।

माहिषम् । न॰ महिष्याधर्मे ॥ अण्महिष्यादिभ्य : ॥ त्रि॰ महिषसम्बन्धिनि ॥ महिषोपजीविनि । महिष्या : ॰ महिषस्यवा॰इदम् । अण् ॥

माहिषमस्तक : । पुं॰ शालिप्रभेदे ॥

माहिषिक : । पुं॰ महिषजीवने ॥ महिषीपतौ । व्यभिचारिण्यनुरक्तपतौ ॥ यथा । महिषीत्युच्यतेनारी यायस्माद्व्यभिचारिणी । तांदुष्टांकामयतिय : सवैमाहिषिक : स्मृत : ॥ भगदारोपार्जितस्त्रीधनोपजीविनि ॥ यथा । महिषीत्युच्यते भार्याभगेनोपार्जितंधनम् । उपजीवतियस्तस्या : सवैमाहिषिक : स्मृतस्तु ॥

माहिष्मती । स्त्री॰ शिशुपालनगर्याम् ॥

माहिष्य : । पुं॰ वर्णसङ्करजातिविशेषे । वैश्यायांक्षत्रियादुत्पन्ने ॥ नक्षत्रजीवनंनृत्यगीतिसस्यरक्षणम् । माहिष्याणांशुभावृत्ति : प्रोक्ताशोधनसाम्नयम् ॥

माहेन्द्र : । पुं॰ शुभदण्डविशेषे ॥ रव्यादिवारेषुवायुवरुणयममहेन्द्राणामेकैकदण्डाभवन्ति तत्रवरुणमहेन्द्रयोर्दण्डौशुभौ । वायुयमयोर्दण्डावशुभौ ॥ यथा । स्यातंवावययमासूर्येमावावयकलानिधौ । वयमावाकुजेज्ञ यामावावयसुधांशुजे ॥ गुरौवावयमावेव॰मावावयतथाभृगौ । सूर्यपुत्रे यमावावघटीयुग्मंशु

भाशुभम् ॥ माहेन्द्रे विजयो नित्यं वारुणे चधनागम : । वायौ चभ्रमते नित्यं यमेपि मरणं ध्रुवम् ॥ त्रि० महेन्द्रसम्बन्धिनि ॥

माहेन्द्री । स्त्री० गवि ॥ शच्याम् ॥ अमरावत्याम् ॥

माहेय : । त्रि० मह्या अपत्ये ॥

माहेयी । स्त्री० गवि । सौरभेय्याम् ॥ मह्या : गोत्रापत्यम् । स्त्रीभ्योढक् ॥ मह्यते पूज्यते मह० पुंसीति० खनोघचेतिघाघ : । महाया अपत्यम् । ढक्० इतिस्वामी ॥

माहेशी । स्त्री० दुर्गायाम् ॥ यथा । महादेवात्समुत्पन्ना महेशि : प्रोच्यते यत : । माहेश्वर्यातनुर्यस्या माहेशी तेनसास्मृता ॥ ( * ) ॥ ॥

माहेश्वर : । त्रि० कौलिके । जीवन्मुक्ते । यथा । धन्नैर्माहेश्वरै : स्वार्थप्रत्यभिज्ञानशालिभि : । स्वपरिज्ञानमात्रेण जीवन्मुक्ता भवन्तिहि ॥ अस्मात्क्रमानादितमानसानां माहेश्वराणां दिवमा : प्रयान्त्वितिच ॥ महेश्वरसम्बन्धिनि ॥ तस्येदमित्यण् । न० उपपुराणविशेषे ॥

माहेश्वरपदम् । न० तीर्थविशेषे ॥

माहेश्वरी । स्त्री० दुर्गायाम् ॥ मातृभेदे । यवतिक्तायाम् ॥ विष्णौ ॥ यथा कौर्मे ४ ८ ध्याये । अयंनारायणो गौरी जगन्माता सनातन : । विभज्य संस्थितो देव : स्वात्मानं बहुधेश्वर : ॥ नमे विदु : परं तत्त्वं देवाद्या न महर्षय : । एकोयं देवदेवात्माभवानी विष्णुरेवचेत्यादि वचनात् । शिवशक्ताम् ॥ महेश्वरस्येयम् । अण् । ङीप् ॥ तीर्थविशेषे ॥

मित : । त्रि० ज्ञाते ॥ निश्चिते ॥ परिच्छिन्ने ॥ मीयतेस्म । मा० माङ्० मेङ् प्रक्षिदानेवा । क्त : । द्यतिस्यतीतीकारान्तादेश : ॥ ( * ) ॥

मितङ्गम : । पुं० दन्तावले । हस्तिनि ॥ मितङ्गच्छति । गम्लृ० । गमे: सुपिवाच्यइतिखच् । खितिमुम् ॥ स्त्री० टाप् ॥ त्रि० परिमितगामिनि ॥

मितद्रु : । पुं० समुद्रे ॥ मितंद्रवति । द्रु० । हरिमितयोर्द्रुवइतिकु: ॥

मितम्पच : । त्रि० किम्पचाने ॥ कृपणे ॥ दुर्गते ॥ मितम्पचति । मितनखे च तिमितोपपदात्पचे : कर्त्तरिखश् । मुम् ॥

मिताशन : । त्रि० युक्ताहारे । परिमितभोजिनि ॥ मितमशनंयस्य स : ॥

मिति : । स्त्री० ऐयत्त्ये । अवच्छेदे ॥ माने ॥ विज्ञाने ॥ मानम् । माङ्० । क्तिन् । द्यतिस्यतीतीत्त्वम् ॥

मित्र : । पुं० द्युमणौ । सूर्ये ॥ न०

सुहृदि । सख्यौ । मीत० इ० भा० ॥ यथा । सार्थः प्रवसतोमित्रंभार्यामित्रंगृहेसतः । आतुरस्यभिषङ्मित्रंदानंमित्रंमरिष्यतः ॥ इति । अपिच । सन्त्याग:सहनोबन्धुः सदैवानुगतः सुहृत् । एकक्रियोभवेन्मित्रंसमप्राणः सखाभवेत् ॥ इतिभेदस्त्वविवक्षितः ॥ स्नेहेनोपकर्त्तरि । प्रीतिकारके । तच्चतुर्धविधंयथा । सहार्थीभजमानश्च सहजः कृत्त्रिमस्तथेतिभेदात् ॥ नकश्चित्कस्यचिन्मित्रंनकश्चित् कस्यचद्रिपुः । कारणादेवजायन्तेमित्राणिरिपवस्तथा ॥ साध्वीर्यानमदंकुर्यात्नसुखीदृष्णायोज्झितः । तन्मित्रंयस्यविश्वासः पुरुषः सजितेन्द्रियः ॥ सर्वथासुकरंमित्रंदुष्करंपरिपालनम् । अनित्यत्वाद्धिचित्तानांप्रीतिरल्पेपिभिद्यते ॥ शत्रोः परस्मिन् । स्वदेशाऽव्यवहितराजात् परस्मिन् ॥ विषयानन्तरोराजाशत्रुर्मित्र मतः परमित्यमरोक्तेः ॥ हिरण्यभूमिसम्प्राप्त्यापार्थिवोनतथैधते । यथा मित्रंध्रुवंलब्ध्वाकृशमप्यायतिक्षमम् । धर्मज्ञञ्चकृतज्ञञ्चतुष्टप्रकृतिमेवच । अनुरक्तंस्थिरारम्भंलघुमित्रंप्रशस्यते ॥ मेद्यति । ञिमिदास्नेहने अमिचिमिदिशसिभ्यः क्त्रइतिक्त्रः । यद्वा । मितात्त्रायते । त्रैङ्पालने । सुपोतिकः ॥ अष्टमतारायाम् ॥ अनुराधानक्षत्रे ॥ सर्वभूतात्मकेतातजगन्नाथे जगन्मये । परमात्मनिगोविन्दे मित्रामित्रकथाकुतः ।

मित्रद्रोही । त्रि० नरकाधिकारिविशेषे । मित्रद्रुहि ॥ यथा । मित्रद्रोहीकृतघ्नश्चयश्चविश्वासघातकाः । तेनरानरकंयान्तियावच्चन्द्रदिवाकराविति सप्तमिरोपाख्यानम् ॥

मित्रध्रुक् । पुं० मित्रद्रोहिणि । मित्रस्यापकारके ॥ मित्रंद्रुह्यति । द्रुहः सत्सूद्विषेतिक्विप् ॥

मित्रयुः । पुं० लोकयात्राभिज्ञे ॥ । त्रि० मित्रवत्सले । क्याच्छन्दसीत्युः ॥ यद्वा मित्रंयाति । या० । मृगय्वादित्वात्कुः ॥

मित्रयुद्धम् । न० मैत्रेयिकायाम् । सुहृत्संग्रामे ।

मित्रलब्धिः । स्त्री० ) मित्रलाभः । पुं० ) सुहृत्प्राप्तौ ॥

मित्रवत्सलः । त्रि० मित्रप्रिये । मित्रयौ ॥ मित्रंवत्सलंयस्यसः ॥

मित्रा । स्त्री० सुमित्रायाम् । शत्रुघ्नमातरि ॥

मित्रावरुणीयम् । न० मित्रावरुणस्यकर्त्त्विग्विशेषस्यकर्मभावयोः ॥ छोत्राभ्यश्छः ॥

मिथ: । अ॰ अन्योन्यस्मिन् । सहार्थे ॥ रहोर्थे ॥ मेथति । मेथृसङ्गमे । असुन् । पृषोदरादित्वात् ह्रस्व: ॥

मिथि : । पुं॰ मिमिराजपुत्रे । जनके ॥

मिथिला । स्त्री॰ जनकपुर्याम् ॥ विदेहायाम् ॥ देशविशेषे । तैरभुक्ति । तिरहुत॰ इ॰ भा॰ प्र॰ ॥ यथा । गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे । विदेहभू : समाख्याता तैरभुक्ताभिध : सतु ॥ मथ्यं तेरिपवोऽत्र । मथ विलोडने । मिथिलादयश्च तीलच् । अकारस्य इत्वं निपातनात् ॥

मिथु । अ॰ द्वाविच्यर्थे ॥

मिथुनम् । न॰ स्त्रीपुंसयोर्युग्मे । इ नृह्रे । युगले ॥ जुगल॰ जोडी॰ इ॰ भा॰ ॥ द्वयो : ॥ सुरते । द्वन्द्वजनित सुखे ॥ तृतीयराशौ । मिथुने ॥ मिथुनलग्नजस्यफलं यथा । मिथुनोदयसञ्जातोमानीस्वजनवत्सल: । त्यागीभोगीधनीकामीदीर्घसूत्रीरिमर्द्दन : । मेथति । मिथृसङ्गमेच । क्षु धिपिशिमिथिभ्य : कित्‌ (?) उनन् उपसर्गविशिष्टे धातौ । सम्बन्धे ॥

मिथुनाधिप : । पुं॰ बुधग्रहे ॥

मिथो । अ॰ रहसि ॥ सहार्थे । अन्योन्यस्मिन् ॥ मेथति । मेथृ॰ । बाहु लकादो : । पृषोदरादित्वाद्दस्व: ॥

मिथ्या । अ॰ अनृते । वितथे ॥ प्रागभावयुतस्त्वेसत्यचिन्तारचनात्त्वं मिथ्यात्वमितिमिथ्यालक्षणम् ॥ सदसद्भ्यासमानं तन्मिथ्यात्वप्रगजादिवदितिच ॥ स्त्री॰ अधर्मपत्न्याम् ॥ यथा । अधर्मपत्नीमिथ्यासासर्वधूर्त्तप्रपूजिता । ययाविनाजगत्सर्वमुच्छिन्नं विधिनिर्मितम् ॥ मिथ्ययाविनाधूर्त्तसमुदाय रूपमुच्छिन्नं भवति । मिथ्याभाषणाभावेधूर्त्तत्वस्याभावात् इत्यर्थ: । सत्येचादर्शनायाचस्व तायांमृषारूपिणी । अर्द्धावयवरूपाच द्वापरे चैवसंवृता ॥ कलौमहाप्रगल्भाचसर्वव्यापिकाबलात् । कपटेनसमं भ्रावाभ्रमत्य वगृहेगृहे ॥ मयते । मये॰ । अघ्न्यादित्वात्साधु : ॥

मिथ्याचार : । त्रि॰ पापाचारे ॥ अत्यत्र भावेनफलायोग्यत्वात् ॥

मिथ्याज्ञानम् । न॰ भ्रे द्वाप्रदपूर्वके॰ अन्यस्यान्यात्मताबभासे ।

मिथ्यादर्शनम् । न॰ शास्त्रोपपत्तिबाह्ये हेतदर्शने ।

मिथ्यादृष्टि: । स्त्री॰ कर्मफलापवादकज्ञाने । नास्तिकतायाम् । मिथ्येत्यपवर्ये॰ तद्विषयिणीदृष्टिर्ज्ञानम् । असतत्यदर्शने ॥

मिथ्याध्यवसिति : । स्त्री॰ मिथ्याध्यवसाये ॥

मिथ्यानिरसनम् । न॰ शपथे ॥

मिथ्याप्रयुक्त : । त्रि॰ यदर्थंप्रतिपादनायप्रयुक्तस्ततोऽर्थान्तरंस्वरवर्णदोषात्प्रतिपादयति । शब्दे ॥

मिथ्याभियोग : । पुं॰ अभ्याख्याने । शतंमेधारयसीत्यादिमिथ्योद्भावनरूपे॰ मिथ्यापवादे ॥ मिथ्याचासावभियोगश्च ॥

मिथ्याभिशंसनम् । न॰ अभिशापे । । स्वर्णस्तेयंत्वयाकृतमित्यादिमिथ्यास्तेयादिसाधनरूपे मिथ्यारोपवाक्ये ॥ अभिशंसेर्भावेल्युट् ॥

मिथ्याभिशाप : । पुं॰ मिथ्यापवादे ॥ यथा । शुक्लपक्षे चतुर्थ्यान्तुसिंहेचन्द्रस्यदर्शनम् । मिथ्याभिशापंकुरुते नपश्येत्तत ततः ॥

मिथ्यामति: । स्त्री॰ भ्रान्तौ । भ्रमे ॥ मिथ्याचासौमतिश्च ॥

मिथ्याविनीत : । त्रि॰ कपटेनविनयिनि ॥

मिथ्यासाक्षी । त्रि॰ कूटसाक्षिणि ॥ तस्यज्ञानप्रकारमाहयाज्ञवल्क्य : । उक्तेपिसाक्षिभि : साक्ष्येयद्यन्येगुणवत्तमा : । द्विगुणावान्यथाब्रूयु : कूटा : स्यु : पूर्वसाक्षिण : ।

मिथ्योत्तरम् । न॰ चतुर्विधोत्तरान्तर्गतोत्तरविशेषे ॥ तल्लक्षणंयथा । अभियुक्तोऽभियोगस्ययदिकुर्यादपह्नवम् । मिथ्यातत्तुविजानीयादुत्तरंव्यवहारत : ॥ तच्चतुर्विधंयथा । मिथ्यैतन्नाभिजानामि ममतत्रनसंनिधि : । अजातश्चास्मितत्काले॰ इतिमिथ्याचतुर्विधम् ॥ इतिव्यवहारतत्त्वं ॥

मिथ्योपलब्धि : । स्त्री॰ मायागन्धर्वनगरादिज्ञाने ॥ मिथ्याचासावुपलब्धिश्च ॥

मिद्धम् न॰ चिन्ताभिसङ्कल्पे ॥ आलस्ये ॥ चित्ते ॥ निद्रायाम् ॥

मिन्मिन : । त्रि॰ सानुनासिकवाग्विशिष्टे । गुनगुना॰ इ॰ भा॰ । खोना॰ इ॰ गौ॰ दे॰ भा॰ । मीमणा इ॰ पर्वतीयभाषा ॥ अस्यनिदानन्तु । आवृत्त्यवायु : सकफोधमनी: शब्दवाहिनी : । नरान्करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ।

मिमङ्क्षु : । त्रि॰ मङ्क्तुमिच्छौ ॥ मस्जे : सन्नन्तादुप्रत्यय : ॥

मिमन्थिषु : । त्रि॰ मथितुमिच्छौ ॥ मथे : सन्नन्तादु : ॥

मिमान : । त्रि॰ मानङ्कुर्वाणे ॥ माङोलट : शानजादेश : । श्लाविति द्विर्भाव : ॥

मिम्मिण : । त्रि॰ )
मिम्मिन : । त्रि॰ ) मिन्मिने ॥

मिलितः। त्रि॰ सङ्गते। युक्ते॥ मिश्रिते॥ श्लिष्टे। सम्बन्धविशिष्टे॥ मिलसंश्लेषे। कर्त्तरि क्तः॥

मिशिः। स्त्री॰ जटामांस्याम्॥ मधुरिकायाम्। धानसौंफ॰ इ॰ भा॰॥ मिशति। मिश॰। इन्।

मिशी। स्त्री॰ जटामांस्याम्॥ मधुरायाम्॥ धानसौंफइतिभाषा॥ मिशति। मिश॰ इन्। कृदिकारादितिङीष्॥

मिश्रः। पुं॰ गजजातिविशेषे॥ यथा। भद्रोमन्द्रोमृगोमिश्रश्चतुर्धागजजातयः॥ न॰ विशेषनचनसंज्ञायाम्। यथा। छिद्रैर्वाकृत्तिकाचैवमिश्रंसाधारणंबुधः। एषुमिश्राणिकार्याणिवृषोत्सर्गादिकंतथा। चाणक्यमूलकं॥ मिश्रफले॥ त्रि॰ आर्य्ये। श्रेष्ठे॥ संयुक्ते। सम्पृक्ते। मिश्रिते॥ मिश्रयति। मिश्र॰। अच्॥

मिश्रकम्। न॰ तीर्थविशेषे। देवोद्याने॥ औषरलवणे॥

मिश्रकावणम्। न॰ इन्द्रस्योद्याने। नन्दनवने॥ मिश्रकाणांवनम्। वनगिर्योः संज्ञायांकोटरकिंशुलुकादीनामितिदीर्घः। वनंपुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यइतिणत्वम्॥

मिश्रजः। पुं॰ अश्वतरे। खेसरे॥

मिश्रणम्। न॰ एकत्रीकरणे। संयोजने॥ मिश्र॰। ल्युट्॥

मिश्रपुष्पा। स्त्री॰ मेथिकायाम्॥

मिश्रफलम्। न॰ इष्टानिष्टसंयुक्ते मानुष्यलक्षणे पापपुण्ययुगलस्यफले॥ मिश्रश्चतत्फलञ्च।

मिश्रवर्णम्। न॰ कृष्णागुरुणि॥ त्रि॰ नानावर्णयुक्ते॥

मिश्रवर्णफला। स्त्री॰ वार्त्ताक्याम्॥

मिश्रशकुनम्। न॰ शुभाशुभयोः सूचकेनिमित्ते॥ यथा। वह्निग्रामंरुदितंप्रशस्तमदृष्टदेहोयदिरोदिता स्यात्निन्दन्त्यवामंपथिसर्वकामान्शुभंविधत्ते रुदितंरजन्याम्मृत्युः सुतानांरुदितेनपृष्ठे लाभोभवेत्तत्र निवर्त्तनेन। मृत्युस्तथाग्रेरुदितेन गन्तुः सिद्धिंविधत्तेरुदितंरिपूणाम्॥ उग्रंभवेद्द्रोदनमग्निभागेभयंभवेद्दक्षिविभागभूते। नैरृत्यकोणेरणमार्गरोधोवायव्यकोणे रुदितंसमृद्धौ॥ पृष्ठांशयोर्दक्षिणवामयोश्चसिद्धिः सदातोरणरोदनेन। शुभोपिसम्यग्यदिरोदनार्थीज्ञातोविभाव्यः सपुनस्तथापि॥ यद्यालकेनोक्षमनं दिनेनतत्स्यात्सत्यंनयुगान्तरेपि। क्षुतंनकार्य्येक्वचिदेवशस्तं गवांक्षुतम्प्राणहरंमतन्तु॥ निषिधमग्रेऽक्षिणिदक्षिणे चधनक्षयंदक्षिण-

कर्णदेशे । ततपृष्ठभागेकुरुतेऽरिष्ठ-
हिंसुतंकृकाम्याशुभमादधाति ॥
भोगायवामश्रवणस्यपृष्ठे कर्णेच
वामेकथितंजयाय । सर्वार्थलाभा-
यचवाममेवेजातंचुतंस्यात्क्रमतोऽ
ष्टधैव ॥ क्रमान्निषेधंगमनस्यविघ्नं-
कालंसमृद्धिंचुतमुपरोगम् । करो-
तिरोगचयमर्थलाभंदीप्तादिदिक्षुचु
तमुन्नतंसत् ॥ औषधेषाहनारोहेवि
वादेशयनेऽशमे । विद्यारम्भे बीज-
वायेचुतंसप्तसुशोभनं ॥

मिश्रशब्द : । पुं० अश्वतरे ॥

मिश्रा । स्त्री० सङ्क्रान्तिविशेषे ॥ भृ
गौमिश्रमेसाभवेदेवमिश्रापशूनांसु-
खं तत्रविद्वद्भिरुक्तम् ॥

मिश्रिका । स्त्री० मिश्रायाम् ॥ मिश्रै-
वस्वार्थेक : ॥

मिश्रित : । त्रि० गौरविते ॥ मिलिते
। युक्ते ॥ ( * ) ॥ ॥

मिश्रिता । स्त्री० सङ्क्रान्तिविशेषे ।
मिश्रायाम् ॥ मिश्रिताचैवविज्ञेया
मिश्रितर्क्षेस्तुसङ्क्रमे ॥

मिश्रेया । स्त्री० मधुरिकायाम् । सौं
फ० धनसौंफ० धन्साबा० इ० भा० ॥
शतपुष्पायाम् । तालपर्ण्याम् । व-
नजायाम् । अवाक्पुष्प्याम् । सं-
हितपुष्पिकायाम् । सलुफा० इ० -
गौ० दे० भा० ॥ मिश्रेयातद्गुणाप्रो-
क्ताविशेषाद्योनिशूलनुत् । अग्निमा
न्द्यहरीहृद्याबद्धविट्क्रमिशुक्रहृत् ॥
रूक्षोष्णापाचनीकासवमिश्लेष्मानि
लान्हरेत् ॥ तद्गुणा० मधुरिका-
पर्यायशतपुष्पागुणा ॥ मिश्रयति ।
मिश्र० । अच् । ईयते । ईङ्० ।
पचाद्यच् । मिश्राचासावेयाच ।
शकन्ध्वादि: ॥

मिष : । पुं० स्पर्द्धने ॥ न० व्याजे ॥
मिषति । मिष० । क : ॥

मिषन् । त्रि० पश्यति ॥

मिषि : । स्त्री० मधुरिकायाम् ॥ शत
पुष्पायाम् । जटामांस्याम् ॥

मिषिका । स्त्री० जटामांस्याम् ॥

मिषी । स्त्री० मिस्याम् ॥

मिष्ट : । पुं० मधुररसे ॥ नूतनसर्ष-
पशाकंनवौदनं पिच्छिलानिचदधी
नि । अल्पव्ययेसुन्दरिग्राम्यजनो-
मिष्टमश्नाति ॥ त्रि० मधुररसवि-
शिष्टे ॥

मिष्टनिम्बुकम् । न० मीठा० नीम्बू०
इतिप्रसिद्धे फले । मिष्टनिम्बुफलं
स्वादुगुरुमारुतपित्तनुत् । गलरोग-
विषध्वंसिकफोत्क्लेशिचरक्तहृत् ।
शोषारुचितृषाच्छर्दिहरंबल्यञ्चबृंह
णम् ॥

मिष्टान्नम् । न० मधुरद्रव्ये ॥ मिष्टान्न
पानदाताथसततंश्रद्धयान्वित: । दे
वपूजापरोनित्यं नप्रेतोजायतेमृ-
त : ॥

मिसि : । स्त्री॰ मधुरायाम् ॥ जटामांस्याम् ॥ शतपुष्पायाम् ॥ अजमोदायाम् ॥ मस्यति । मसीपरिणामे । सर्वधातुभ्यइन् । बाहुलकादत : स्यामिइ : ॥ उशीर्याम् ॥

मिसी । स्त्री॰ मिसी । तपस्विन्याम् । जटामांस्याम् ॥ मस्यति मसी॰ । इन् । कृदिकारादितिङीष् । पृषोदरादि : ॥

मिहिका । स्त्री॰ अवश्याये । नीहारे । तुषारे । मेहति । मिहसेचने । कुन् शिल्पिसंज्ञयोरितिकुन् ॥

मिहिर : । पुं॰ विकर्त्तने । अर्के । मार्त्तण्डे । सूर्ये ॥ मेघे ॥ बुद्धे ॥ मेहति मिह॰ । इषिमदिमुदिखिदीतिकिरच् ॥ वायौ ॥ वृद्धे ॥

मिहिराण : । पुं॰ जगद्योनौ । शिवे ॥

मीढ : । त्रि॰ मूत्रिते ॥ मिह्यतेस्म । मिह॰ । क्त : ॥ सिक्ते ॥

मीढुष्टम : । पुं॰ शिवे ॥

मीढ्वान् । पुं॰ शिवे ॥ मीढ्वांसौ॰ मीढ्वांस : इत्यादि ॥

मीत : । त्रि॰ हते ॥ मीयतेस्म । मी अहिंसायाम् । गत्यर्थेतिकर्त्तरिकर्म्मणिवाक्त : ॥

मीन : । पुं॰ मत्स्ये ॥ राशिविशेषे । अन्त्यभे । अत्रजातस्यफलं यथा । मीनलग्ने समुत्पन्नो रत्नकाञ्चनपूरित : । अल्परोमामहाप्राज्ञोदीर्घकालपरीक्षक : । मीनाति॰ मीयते वा । मञ्॰ फेनमीनाविति निपातित : ॥ भगवतोविष्णो : प्रथमावतारे ॥ प्रकृतिर्विष्णुरूपाच पुंरूपश्चमहेश्वर : । एवंप्रकृतिभेदैनर्भदास्तुप्रकृतेर्दश ॥ कृष्णरूपा कालिकास्याद्रामरूपाचतारिणी । बगलाकूर्ममूर्त्ति : स्यान्मीनोधूमावतीभवेत् । छिन्नमस्तानृसिंह : स्याद्वराहस्यैवभैरवी । सुन्दरीजामदग्न्य : स्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्यात्मातङ्गीकल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयञ्चभगवान् कृष्ण : कालीरूपीभवद्व्रजे ॥

मीनकेतन : । पुं॰ प्रद्युम्ने । कन्दर्पे ॥ मीनशब्दोजलचरोपलक्षणार्थ : । मीनोमकर : केतनंध्वजोयस्यस : ॥

मीनगोधिका । स्त्री॰ जलाशये ॥

मीनघाती । पुं॰ बके ॥ त्रि॰ मत्स्यघातके ॥

मीननेत्रा । स्त्री॰ गण्डदूर्वायाम् ॥

मीनर : । पुं॰ जलरूपे । मकरे । अतिदंष्ट्रके ॥

मीनरंक : । पुं॰ पक्षिविशेषे । मत्स्याशने ॥

मीना । स्त्री॰ उषाकन्यायाम् । कश्यपस्यभार्यायाम् ॥

स्वपच्चवचनेनाग्निहोत्रादिनामानु-
मितवचनेनपचसामान्यतीतिदेशः।
षष्टमेसौर्यञ्चरुं निर्वपेदित्यवचनिवा-
पस्तद्वितेनदेवता निर्देशः॰ एकदे
वतत्वमौषधत्वाकत्वमित्यादिलि
ङ्गमाग्नेयपुरोडाशेतिकर्त व्यताना
न्यस्य त्यवस्थादिविशेषतोतिदेशः।
नवमेप्रकृत्यादिजुष्टं निर्वपामीति
पठितेमन्त्रे प्रकृतौमौर्यचरावग्नि
पदपरित्यागेन सूर्यपदप्रक्षेपेणसूर्याय
जुष्टंनिर्व... ...र्यादि ह:।
दशमेक... ...दृकपालस्यावघात
स्यचित्... ...भवेनलोपदर्श
नम... ।एकादशेवहनामा-
न्नेया... ...नांसकृदनुष्ठितेन
प्रय... ...तोपकार इत्यादित-
न्त्रम्... ...प्रधामस्यप रूपका-
रायानु ...भयाजाद्यङ्गमप्रसङ्ग पु
रोडाश... ...कारसहत्या द्वाप्रसङ्ग:।
विस्तार: शास्त्र द्रष्टव्य:॥
मीमांस्य:।त्रि॰ विचार्ये।
मीर:।पुं॰ समुद्रे पानीये॥ सी
मनि॥ पर्वतैकभागे॥ मिनोति।
डुमिञ् प्रक्षेपणे। शुसिचिमीनां-
दीर्घश्चेतिक्रन्॥ मत्स्यजातिभे-
दे॥ यथा। पञ्चखामाः सप्तमीरा
नवशाखामहाबलाः॥
मीलनम्।न॰ चक्षुभिरावरणे॥ अ
लङ्कारविशेषे॥ मीलनंवस्तुनायत्र
...लङ्कारनिगूहनम्॥
मीलितः।त्रि॰ अप्रफुल्ले। सङ्कुचि-
ते॥ निद्राणे मुद्रिते॥ न॰ अल
ङ्कारविशेषे॥ यथा। समेनलक्ष्मणा
वस्तुवस्तुनायन्निगूह्यते। निजेनाग
न्तुनावापितन्मीलितमितिस्मृतम्॥
सहजमागन्तुकञ्च किञ्चित्साधारण
यल्लक्ष्मतद्द्वयेनकिञ्चित्केनचिद्व-
स्तुस्थित्यैवस्तीयस्तथातिरोधीय-
तेतन्मीलितमितिप्रयाहुरन्ति।क्र
मेणोदाहरणम्। अपाङ्गतरलेदृशौ
मधुरवक्रवर्णागिरोविलासभरमन्थ-
रागतिरतीवकान्तंमुखम्। इति-
स्फुरितमङ्गकेमृगदृशःस्वतो-
लीलयातदत्रनमदोदय:कृतपदो
विसंलक्ष्यते अत्रहृद्यरतरलतादि-
कमङ्गलिङ्गत्वाभाविकंसाधारण-
चमदोदयेनतत्राप्यंतद्दर्शनात्॥
वीवन्दरामुनिवमन्तिमदाहिमाद्रि-
स्त्वत्पातशङ्कितधियोविवशाद्विष-
स्ते। अप्यङ्गमुत्पुलकमुद्वहतांसक-
म्पं तेषामहोवतभियांनबुधोप्यभि-
ज्ञ:॥ अत्रतुसामर्थ्यादवसितशै-
त्यस्यागन्तुकत्वात्तत्प्रभवयोरपि-
कम्पपुलकयोस्ताद्रूप्यम्॰समानता
भयेप्यपितयोरुपलक्षितत्वात्
मीवा।पुं॰ वायौ॥ उदरक्रमौ॥ मी
यते। मीञ् हिंसायाम्। शेवयह्व-
जिह्वाग्रीवाप्वामीवा:॰इ तवन्

न्नोनिपातितः ॥

मीवरः। त्रि० हिंस्रे ॥ मीनाति। मीञ्० । छित्वरछत्वरेत्यादिना ष्वरच् ॥

मु :। पुं० बन्धने ॥ मरणे ॥

मुकुः। पुं० मुक्तौ ॥

मुकुटम्। न० शिरोभूषणे । किरीटे ॥ मङ्कतेऽनेनवा। मकि मण्डने। बाहुलकादुटप्रत्ययोधातोरतउत्त्वं ॥

मुकुटी। स्त्री० अङ्गुलिमोटने।

मुकुटेश्वरी। स्त्री० माकोटस्थानस्थायांदेव्याम् ॥

मुकुन्दः। पुं० विष्णौ। गरुडध्वजे ॥ मुकुमव्ययं नाम्नामुक्तिनिर्वाणमोक्षवाचकम्। तद्ददातिचयोदेवोमुकुन्दस्तेनकीर्त्तितः इ० ब्र० वै० पु० निधिप्रभेदे ॥ रत्नविशेषे ॥ पारदे ॥ कुन्दुरौ ॥ मुक्तिं ददाति। आतोनुपेतिकः। पृषोदरादिः ॥

मुकुन्दकः। पुं० षष्टिकव्रीहौ ॥ षष्टिकः शतपुष्पश्चप्रमोदकमुकुन्दकौ। महाषष्टिकइत्याद्याः षष्टिकाः समुदाहृताः ॥

मुकुन्दुः। पुं० कुन्दुरौ ॥

मुकुम्। अ० निर्वाणे। भक्तिरसे। प्रेमणि ॥

मुकुरः। पुं० आदर्शे। दर्पणे ॥ बकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ सुश्रुतिज्योतिः। मुचल० । बाहुलकादुरच् ॥ यद्वा। मङ्कते मकि० । मकुरदर्दुरावित्युरच्० नलोपश्च। बाहुलकात्पर्वे धातोरुपधायाउकारश्च ॥

मुकुलः। पुं० न० ईषद्विकाससम्मुखकलिकायाम्। कुड्मले। मुञ्चति कलिकात्वम्। मुच्लृ मोक्षणे। बाहुलकादुलक्। आत्मनि॥ शरीरे ॥

मुकुलितः। त्रि० निमीलिते

मुकूलकः। पुं० दन्तिवृक्षे। निकुम्भे ॥ मङ्कते। मकि० । पिञ्छादित्वादूलच्। स्वार्थे कन्। आगमशासनस्यानित्यत्वान्ननुम्। पृषोदरादिः ॥

मुक्तः। त्रि० मोचिते ॥ उत्सृष्टे। त्यक्ते व्यपगतपाशे। विमुक्तमोहादिबन्धने। यमक्रोऽदिषु समुक्तः ॥ निवृत्ताविद्ये। कर्तृत्वभोक्तृत्वाद्यध्यासशून्ये। कल्पितवियदादिप्रपञ्चनिरासाधिष्ठाने ॥ अस्यलक्षणमपियथा। कपालं वृक्षमूलानिकुचेलमसहायता। समताचैवसर्वस्मिन्नेतन्मुक्तस्यलक्षणम् ॥ अस्यनमस्काराभावोभगवत्पूज्यपादैर्दर्शितोयथा। नामादिभ्यः परे भूम्निस्वाराज्ये चेत्स्थितोऽद्वये। प्रणमेत्कन्तदात्मज्ञोनकार्यं कर्मणा तदेतिविज्ञायनामरूपाणिमिथ्या ब्रह्म

विनिश्चले। परिनिश्चिततत्त्वोय: समुक्त: कर्मबन्धनात्॥ नमुक्तिर्जपनाद्धोमादुपवासशतैरपि। ब्रह्मैवाहमितिज्ञात्वामुक्तोभवतिदेहभृत्॥ आत्मासाक्षीविभु: पूर्ण: सत्योऽद्वैत: परात्पर:। देहस्थोपिनदेहस्थोज्ञात्वैवं मुक्तिभाग्भवेत्। बालक्रीडनवत्सर्वं रूपनामादिकल्पनम्। विहायब्रह्मनिष्ठोय: समुक्तो नात्रसंशयइतिश्रीमहानिर्वाणतन्त्रे कुलार्णवर्मतीचतुर्दशोल्लास:। मुच्यतेस्म। मुच्लृ०। क्त:॥

मुक्तकञ्चुक:। पुं० निर्मुक्ते। अचिरत्यक्तनिर्मोकेसर्पे॥ मुक्त: कञ्चुकोयेन॥

मुक्तचक्षु:। पुं० सिंहे॥ त्रि० मुक्तनेत्रे॥

मुक्तबन्धन:। त्रि० त्यक्ताभिमाने॥ त्यक्तपाशे॥ मुक्तंबन्धनंयेनयस्यवा॥

मुक्तरसा। स्त्री० रास्नायाम्॥ त्रि० त्यक्तरसे॥

मुक्तसङ्ग:। त्रि० त्यक्तफलाभिसन्धौ॥

मुक्तस्वाप:। त्रि० त्यक्तनिद्रे॥

मुक्ता। स्त्री० मौक्तिके। कुन्दरत्ने। मौक्तिके। मोती० इ० भा० प्र० रत्ने मुच्यतेस्म। मुच्लृ०। क्त:॥ अपगतपाशायां। पुंश्चल्याम्॥

मुक्ताकलाप:। पुं० मुक्ताहारे॥

मुक्तागारम्। न० शुक्त्याम्। मुक्ताया अगारम्।

मुक्तागारा। स्त्री० पुंश्चल्याम्॥ मुक्तं त्यक्तमगारंयया सा॥

मुक्तापुष्प:। पुं० कुन्दवृक्षे॥ मुक्तेवपुष्पाण्यस्य॥

मुक्ताप्रसू:। स्त्री० शुक्तौ॥ मुक्ताया: प्रसू:॥

मुक्ताप्रालम्ब:। पुं० मुक्ताहारे॥

मुक्ताफलम्। न० घनसारे। कर्पूरे॥ लवलीफले॥ मौक्तिके॥ गजेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानिप्रथितानिलोकेतेषान्तुशुक्त्युद्भवमेवभूरि॥ विशेषोन्यत्रगरुडपुराणादौद्रष्टव्य:। अथ वाराह्युक्तंलक्षणादिकंयथा। द्विपभुजगशुक्तिशङ्खाभ्रवेणुतिमिसूकरप्रसूतानि। मुक्ताफलानितेषांबहुसाधुचशुक्तिजंभवति॥ सिंहलकपारलौकिकसौराष्ट्रिकताम्रपर्णिपारशवा:। कौवेर्यपाण्ड्यवाटकहैमकदूत्याकरास्त्वष्टौ॥ बहुसंस्थाना: स्निग्धाहंसाभा: सिंहलाकरा: स्थूला:। ईषत्ताम्रा: श्वेतास्तमोवियुक्ताश्चताम्राख्या:॥ कृष्णा: श्वेता: पीता: सशर्करा: पारलौकिकाविषमा:। नस्थूलानात्यल्पामवनीतनिभाश्चसौराष्ट्रा:॥ ज्योतिष्मन्त: शुभागुरवोऽतिमहागुणाश्चप्रारब्धा।

। सघनजलदधिनिर्भ्रं स्फुटहिमांशुभान मपि हैमम् । त्रिपसंक्षगांश्च तनघु कीवैर्यप्रमाणतैजोवत् । निष्पफल त्रिपुटधान्यकचूर्णाः स्युः पाण्डा ग टभवाः ॥ ६ ॥ एतेषांविशेषमाह । अतसीकुसुमश्यामंवैष्णवमैन्द्रंशशाङ्क संकाशम् । हरितालनिभंवारुणम सितंयमदैवतंभवति ॥ परिणतिदा डिमगुटिकागुञ्जातास्रश्ववायुदैवत्य म् । निर्धूमानलकमलप्रभश्चविज्ञे यमाग्नेयम् ॥ ८ ॥ एतेषांमूल्यपरि ज्ञानार्थमाह । माषकचतुष्टयधृतस्यै कस्यशताहतास्त्रिपञ्चाशत् । कार्षा पणानिगदितामूल्यं तैजोगुणयुतस्य ॥ माषकदलहान्यातोद्वात्रिंशद्विंश तिस्त्रयोदशच । अष्टौशतानिचशतच यंत्रिपञ्चाशतासहितम् ॥ पञ्चत्रिंश च्छतमितिं० चत्वारः कृष्णलानवति मूल्याः । सार्द्धास्तिस्रोगुञ्जाः सप्त तिमूल्यात्ततरूपम् ॥ गुञ्जात्रयस्यमू ल्यं पञ्चाशद्रूपकागुणयुतस्य । रूपक पञ्चत्रिंशत्त्रयस्यगुञ्जार्धहीनस्य॥ १२ अन्यन्मूल्यपरिज्ञानमाह । पलदश भागोधरणंतद्यदिमुक्तास्त्रयोदशसरू पाः । त्रिशतीसपञ्चविंशारूपकस ङ्ख्याकृतं मूल्यम् । षोडशकस्यद्वि शतीविंशतिरूपस्यसप्तति ः सश ता । यः पञ्चविंशतिधृतस्तस्यशतं त्रिंशतासहितम् ॥ त्रिंशतिसप्त



तिमूल्यंचत्वारिंशच्छताईमूल्यश्च । षष्टिः पञ्चोनाशाधरणं पञ्चाष्ट कंमूल्यम् । मुक्ताशीत्याचिंशच्छत स्यसापञ्चरूपकत्रिंशोना । द्विंशच तुष्पञ्चशतादाद्दशषट् पञ्चकंचितय म् ॥ १६ ॥ अथत्रयोदशाद्यानांध रणानांसंज्ञार्थमाह । पिक्का॰पि चार्घार्द्धरवसिक्था त्रयोदशाद्याना म् । संज्ञाः परतोनिगराश्चूर्णा श्चाशीतिपूर्वाणाम् ॥ १७ ॥ एता श्चाकरस्यामैव्यवहारार्थमुपयुज्यन्ते ॥ अथ तदेषांमूल्यपरिज्ञानार्थमाह । एतद्गुणयुक्तानांधरणधृतानांप्रकी र्तितं मूल्यम् । परिकल्प्यमन्तरा लेहीनगुणानांचयः कार्यः ॥ कृष्णश्वेतकपीतकताम्राणामीषद पिचविषमाणाम् । त्र्यंशोनं विषम पीतयोश्चषट्भागदलहीनम् ॥१८ । गजमुक्ताफललक्षणमाह । ऐरा वतकुलजानांपुष्यश्रवणेन्दुसूर्यदि वसेषु । येचोत्तरायणभवाग्रहणेर्के न्द्रोश्चभद्रेभाः ॥ तेषांकिलजा यन्ते मुक्ताः कुम्भेषुसरदकोशेषु । बहवोबृहत्प्रमाणाबहुसंस्थानाः प्रभायुक्ताः ॥ नैषामर्घः कार्योन चवेधोऽतीवताः प्रभायुक्ताः । सुतविजयारोग्यकरा महापवित्रा धृताराज्ञाम् ॥ २ ॥ अथवाराहति मिजयोर्लक्षणम् ॥ दंष्ट्रामूले शशि

तापःक्षीनसंयोज्यकुर्याद्यक्षतुर्मा. इकान् । लघु र्यास्तौविज्ञावयः : स्वादु : शीतोरुचिप्रदः चचुर्ष्या स्वरहृद्वल्यस्तर्पणो मुक्तमोदकः ॥

मुक्तालता । स्त्री० मुक्ताहारे ।

मुक्तावली । स्त्री० मुक्तामालायाम् मुक्तानामावलीदीर्घा-इ॒क्तिः ॥

मुक्तास्फोटः । पुं० शुक्तौ । मुक्तोत्पादिकायांशुक्तौ ॥ मुक्ताः स्फुटन्त्यस्मात् स्फट० । हलश्चेतिघञ् ॥

मुक्तास्फोटा । स्त्री० शुक्तौ ॥

मुक्तिः । स्त्री० कैवल्ये । निर्वाणे । श्रेयसि नि : श्रेयसे । अमृते । मोक्ष । अपवर्गे । स्वरूपावस्थाने । अज्ञाननिवृत्तिलक्षणायांसिद्धौ ॥ मुक्तौतमोतिरेकेणनाम्नरायेणन्यद्-ष्यते । यतोतोऽज्ञानविध्वस्तौमुक्तः सन्न वमुच्यते ॥ साचपुण्यैर्विना-नलभ्यतेइत्याहुराचार्याः यथा । जन्तूनांनरजन्मदुर्लभमतः पुंस्त्वं ततोविप्रतातस्माद्वैदिकधर्ममार्गपरतांविद्वत्त्वमस्मात्परम् । आत्मानात्मविवेचनंस्वनुभवोब्रह्मात्मनासंस्थितिर्मुक्तिर्नोशतकोटिजन्म-सुकृतैः पुण्यैर्विनालभ्यतेइति ॥ मोचनम् । मुचृमोक्षणे । भावेक्तियांक्तिन् ॥ मुक्तिः पञ्चविधेति पौराणिकाः । यथा सालोक्यंचापिसारूप्यंसाष्ट्र्यंसायुज्यमेवच । कैवल्यंचेतितांविद्धिमुक्तिंराघवपञ्च-धां ॥ अपिच । सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्वमप्युत । दीयमानं नगृह्णन्तिविनामत्सेवनंजनाः ॥ इतिभागवताः ॥ मुक्तिस्तुद्विविधामाध्वमुख्यैः सर्वसम्मता । निर्वाणपदद्वाचैवहरिभक्तिप्रदानृणाम् ॥ हरिभक्तिस्वरूपाञ्चमुक्तिंवाञ्छन्तिवैष्णवाः । अन्ये निर्वाणरूपाञ्चमुक्तिमिच्छन्तिसाधवः । इ० ब्र० वै० पुं० ॥ आत्यन्तिकदुःखनिवृत्तिरितिनैयायिकाः ॥ प्रकृतिपुरुषयोर्विवेकग्रहणात्मुक्तिरितिसाङ्ख्याः ॥ प्रकृतावुपरतायांपुरुषस्स्वरूपेणावस्थानंमुक्तिरितिसाङ्ख्यसिद्धान्तः ॥

मुक्तिदः । त्रि० कैवल्यप्रदे ॥

मुक्तिदा । स्त्री० गुरुवाचि ॥

मुक्तिभाक् । त्रि० मुमुक्षौ । मुक्ताधिकारिणि ॥ ब्रह्मज्ञानादृतेदैदिककर्मसन्न्यसनंविना कुर्वन्काम्यन्तंकर्मनभवेन्मुक्तिभाग्जनः ॥

मुक्तिमण्डपः । पुं० काश्यांविश्वेश्वरस्यदक्षिणपार्श्वस्थमण्डपे ॥ यथा । निमेषमात्रंस्थितचित्तवृत्तास्तिष्ठन्तियेदक्षिणमण्डपेत्र । अनन्यभावाश्चपिगाढमानसानतेपुनर्गर्भदशामुपासते ॥

मुक्तिमुक्तः । पुं० गन्धद्रव्यविशेषे । तुरुष्के । सिह्लकी । सिलारस० लोबा

न॰भू॰भा॰ प्र॰ ॥

मुक्तियुक्त : । स्त्री॰ मुक्तिबोधनप्रकार

मुख : । पुं॰ डशी । लकुचे । वङ्ग॰ल॰भू॰भा॰ ।

मुखम् । न॰ शरीरावयवविशेषे । वक्त्रे । श्रास्ये । वदने । तुण्डे । श्रानने । लपने ॥ तत्स्वरूपंयथा । श्रोष्ठौचदन्तमूलानिदन्ताजिह्वाचतालु च । गलोगलादिसकलंसप्ताङ्गंमुखमुच्यते ॥ कथयस्तुललाटादिचिबुकान्तमुदायेप्रयुञ्जते ॥ निर्गमे । नि : सरणे । गृहस्यनिर्गमनप्रवेशनयोर्वर्त्मनि ॥ प्रारम्भे ॥ उपाय ॥ नाटकादे : सन्धिविशेषे ॥ शब्दे ॥ त्रि॰श्रेष्ठे ॥ खन्यते । खनुश्रवदारणे । डित्खनेर्मुट्चोदात्तश्चेत्यच्॰श्रादेर्मुडागम :

मुखकमलम् । न॰ वदनारविन्दे ॥ मखंकमलमिव ।उपमितसमास: ॥

मुखगन्ध : । पुं॰ मुखामोदे ॥

मुखगन्धक : । पुं॰ पलाण्डौ ॥

मुखघण्टा । स्त्री॰ हुलहुल्याम् । मङ्गलकर्मणिस्त्रीणांमुखध्वनिविशेषे । उलूली । हुलु॰भू॰गौ॰भा॰ ॥

मुखचपला । स्त्री॰ आर्याप्रभेदे ॥ आद्यंदलंसमस्तंभजेत लक्ष्मचपलागतं यस्या : । शेषेपूर्वजलक्ष्माम् खचपलासोदितामुनिना ॥ यथा । मन्द स्मितवक्त्रस्त्वंदृढंमतिप्रेमगच्छतश्चैव । यत्रभवतितेरागः कापिसगादेतिमुखचपला ॥

मुखचौरी । स्त्री॰ रसनायाम् । जिह्वायां ॥

मुखतोय : । त्रि॰ मुखशीलतादौ ॥ श्राद्यादित्वात्तसौ॰मुखपार्श्वतसीर्लोपश्चेतिङ : ॥

मुखदूषण : । पुं॰ पलाण्डौ ॥

मुखधावनम् । न॰ श्रास्यप्रक्षालने ॥ पटोलनिम्बजम्ब्वाम्रमालतीवनपल्लवै : । पञ्चपल्लवज : श्रेष्ठ : कषायो मुखधावने ॥

मुखधौता । स्त्री॰ ब्राह्मणयष्टिकायाम् ॥

मुखनिरीक्षक : । पुं॰ अलसे ॥

मुखपूरणम् । न॰ गण्डूषे ॥

मुखप्रिय : । पुं॰ ऐरावते । नागरङ्गे ॥

मुखभूषणम् । न॰ ताम्बूले ॥

मुखमण्डनक : । पुं॰ तिलकवृक्षे । त्रि॰ आस्यभूषणे ॥

मुखामोद : पुं॰ शोभाञ्जने ॥

मुखयन्त्रणम् । न॰कविकायाम् । खलीने ॥

मुखयोनि : । पुं॰ आसेक्ये ॥

मुखर : । त्रि॰ दुर्मुखे । अबद्धमुखे । अप्रियवादिनि ॥ निन्दितं मुखमस्य । रप्रकरणे खमुखकुञ्जेभ्यश्चोपसंख्यानम् । मुखशब्दोऽवत्र

स्यसर्गश्चतुर्थस्तमुख्या वैस्थावरा: ।
स्मृता: इ० वराहपुराणात् ।
मुख्यार्थ : । पुं० शब्दस्य अभिधावृत्त्यागम्यार्थे । यथा । श्रुतिमात्रेण यत्रास्यतादर्थ्यमवसीयते तं मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितम् ॥ प्रतिपाद्यार्थे ॥
मुगूह : । पुं० दात्यूहपक्षिणि ॥
मुग्ध : । पुं० भिषक्विशेषे ॥ यथा । सान्निध्ये विषयाणामसमर्थोऽविजितेन्द्रिय: । मुग्धस्तं तेनिन्धं भिषक् मुग्ध: मर्ज्यते । त्रि० रम्ये । सुन्दरे । मूढे । विवेकविकले । विपर्यस्ते । मुख्यार्थपरिशीलनविधुरे नवे ।
मुग्धा । स्त्री० नायिकाप्रभेदे । उदययौवनामुग्धालज्जाविदितमन्मथा । इ० लक्षणम्
मुचिर : । त्रि० दातरि । मुच्यते । मुच् । घषिमदिमुदीख्यादिभ्य: किरच् ॥ पुं० धर्मे ॥ वायौ । देवे ॥
मुचुकुन्द : । पुं० मान्धातृनृपते: पुत्रे ॥ पुष्पवृक्षविशेषे । क्षत्रवृक्षे । चित्रके । प्रतिविष्णुके । मेचकुन्दफल० इ० भा० । मुचुकुन्द: शिर: पीडापित्तास्रविषनाशन: ॥
मुचुटी । स्त्री० मुकुष्याम् । मुष्टौ । मुष्टी इ० भाषा ॥
मुसल : । पुं० मुष्कवृक्षे ॥

मुञ्ज : । पुं० तृणविशेषे । ब्राह्मण्ये । बाणे । स्पृक्तदर्भे । मूंज० इ० भा० ॥ मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा । दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् । दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥ मुञ्जद्वयम् । मुञ्जभद्रमुञ्जौ ॥
मुञ्जकेशी । पुं० विष्णौ ॥
मुञ्जरम् । न० शालूके ॥
मुञ्जातक : । पुं० मुञ्जे ॥ पुष्पशाकभेदे ॥
मुञ्जावट : । पुं० तीर्थविशेषे ॥ पञ्चमहापातकक्षिहरे । तीर्थान्तरे ॥
मुण्ड : । पुं० दैत्यविशेषे । राहुग्रहे ॥ मुण्डितमस्तकशिर: केशे ब्रह्मचारिविशेषे ॥ मुण्डितकेशश्मश्रुरहिते परिव्राजि ॥ नापिते । स्थाणुद्रौ पुं० न० मूर्द्धनि । न० वोले ॥ मुण्डायसे ॥ त्रि० मुण्डिते ॥ मुण्डते । मुण्डखण्डने । घञ् ॥
मुण्डक : । पुं० नापिते । न० मस्तके ॥ उपनिषद्विशेषे
मुण्डचणक : । पुं० कलाये ॥
मुण्डनम् । न० वपने । परिवापने । क्षौरे । केशच्छेदने । मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधि: । वर्जयित्वा गयां गङ्गां विशालां विरजां तथा । मुडि० । ल्युट् ॥
मुण्डफल : । पुं० नारिकेलवृक्षे ॥

तिकिरच् ॥ कामुके ॥ भेके ॥

मुद्ग : । पुं॰ शमीधान्यभेदे । सूपप्रधाने । रसोत्तमे । भुक्तिप्रदे । हयानन्दे ॥ मुद्गोरूक्षोलघुर्ग्राहीकफपित्तहरोहिम : । स्वादुरल्पानिलोनेत्र्योज्वरघ्नोवनजस्तथा ॥ कृष्णमुद्गोमहामुद्गोहरित : पीतकस्तथा । श्वेतोरक्तश्चतेषान्तुपूर्वं : पूर्वोलघु : स्मृत : ॥ सुश्रुतेनपुन : प्रोक्तोहरित : प्रवरोगुणै : । चरकादिभिरप्युक्तएषएवगुणाधिक : ॥ मुद्गस्फलंमुद्ग : । बिल्वादिभ्योण् । तस्यफलपाकेतिलुपियुक्तवद्भाव : ॥ यद्वा । मोदयति । मुद॰ । मुदिग्रोर्गग्गाविति गक् ॥

मुद्गपर्णी । स्त्री॰ वनमुद्गे । काकमुद्गायाम् । सहायाम् । सूर्पपर्ण्याम् ॥ मुद्गपर्णीहिमारूक्षातिक्तास्वादुश्चक्षुष्याला । चक्षुष्याक्षतशोषघ्नीग्राहिणीज्वरदाहनुत् ॥ दोषत्रयहरीलघ्वीग्रहण्यर्शोतिसारहृत् ॥ मुद्ग : पर्णमस्या : । मुद्गशब्देनमुद्गपर्णसदृशंलक्ष्यते । पाककर्णेतिङीष् ॥

मुद्गभुक् । पुं॰ घोटके ॥

मुद्गभोजी । पुं॰ घोटके । अश्वे ॥

मुद्गमोदक : । पुं॰ मुक्तामोदके ॥

मुद्गर : । पुं॰ लोष्ठादिभेदने ॥ कर्मारवृक्षे ॥ मोगरा॰इ॰भा॰प्र॰पुष्पवृक्षविशेषे । गन्धसारे । सप्तपत्रे । अतिगन्धे । जनेष्टे । स्वनामाप्रसिद्धे॰अस्त्रविशेषे । द्रुघणे ॥ कोरके ॥ न॰मल्लिकाप्रभेदे ॥ गिरति । गृनिगरणे । अच् । मुदोगर : ॥

मुद्गरक : । पुं॰ कर्मारवृक्षे । कमरख इतिभाषा ॥

मुद्गल : । पुं॰ गोत्रकारकेमुनिविशेषे ॥ हर्यश्वराजपुत्रे ॥ म॰रोहिषतृणे ॥

मुद्गवटक : पुं॰ । मूंगवरा॰इतिलोकप्रसिद्धे ॥ मुद्गानांवटकास्तक्रे मज्जितालघवोहिमा : । संस्कारजप्रभावेणत्रिदोषशमनाहिता : ॥

मुद्गवटिका । स्त्री॰ मुंगौडी इ॰लोकप्रसिद्धवटिकायाम् ॥ मुद्गानांवटिकास्तद्वद्रचितासाधितास्तथा । पथ्यारुच्यास्ततोलघ्व्योमुद्गसूपगुणा : स्मृता : ॥ तद्वत्॰माषवटीवत् ॥

मुद्गार्द्रकवट : । पुं॰ वटकविशेषे । अदेवरा॰इ॰भा॰ ॥ आदावड़ा॰इ॰गौ॰भा॰ ॥ मुद्गपिष्ट्याविरचितान्वटकांस्तैलपाचितान् । इस्तेनचूर्णयेत्सम्यक्तस्मिन्नूर्णेविनिक्षिपेत् ॥ भृष्टंहिङ्ग्वार्द्रकंसूक्ष्मंमरिचंजीरकंतथा । निम्बूरसयवानीभ्यांयुक्त्यासर्वंविमिश्रयेत् ॥ मुद्गपिष्टींपचेत्सम्यक्स्थाल्यामास्तारकोपरि । तस्यास्तुगोलकान्कुर्यात्तन्मध्येपूरणंक्षिपेत् ॥ तैलेतानगोलकान्पक्त्वाक्वथितायांनिमज्जयेत् । गोल-

काः पार्थवाः प्रोक्तास्ते स्याद्रुकवटाश्रपि ॥ मुद्राद्रुकवटारुच्या लघवोवलकारकाः । दीपना स्तर्पणापथ्या स्त्रिषु दोषेषु पूजिताः ॥

मुद्रा । स्त्री० प्रत्ययकारिण्याम् । छाप० इ० भाषाप्रसिद्धायाम् ॥ मोदतेऽनया । मुद० । स्फायितञ्चीति रक् ॥ चिन्हे ॥ पञ्चविधलिप्यन्तर्गतलिपिविशेषे छापाअक्षरइति भा० प्र० ॥ यथोक्तं वाराहीतन्त्रे मुद्रालिपिः शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूतालिपयः पञ्चधास्मृताः एताभिर्लिपिभिर्व्याप्ताधरित्रीशुभदाहरेति ॥ मुण्डमालातन्त्रे पियथा । लेखन्यालिखितंविप्रैर्मुद्राभिरङ्कितस्वयत् । शिल्यादिनिर्मितंचपाठ्यंधार्यञ्चसर्वदा ॥ ६० ॥ लोकप्रसिद्धा० स्वर्णरौप्यमुद्रकयोः ॥ पुराणाद्युक्ता० शरीरेधारणीयेभगवत्तआयुधादिचिह्न ॥ कृष्णायुधाङ्कितंदेहंगोपीचन्दनमृत्तया प्रयागादिषुतीर्थेषुसगत्त्वाकिंकरिष्यति यद्दायस्यप्रपश्य तदेहंशङ्खादिचिह्नितं । तद्दातदाजगत्सर्वंमौतुष्टोहर्तिपातकम् ॥ भवतियस्यदेहेतुमद्वोरावंदिनेदिने । शङ्खचक्रगदापद्मं लिखितसोऽच्युतः स यम् ॥ नारायणायुधैर्युक्तं कृत्वात्मानं कलीयुगे । कुरुतेपुण्यकर्माणिमेरुतुल्यानितस्यवै शङ्खादिनाङ्कितोभूत्वाश्राद्धंयः कुरुतेद्विजः । विधिहीनन्तुसम्पूर्णं पितॄणाञ्चगयासमम् यथाग्निर्दहतेकक्षंवायुनाप्रेरितोभृशम् । तथादग्धानिपापानि दृष्ट्वाकृष्णायुधानिवै ॥ देवताप्रीतिजनकाङ्गुलिरचनायाम् ॥ मोदनात्सर्व्वदेवानांद्रावणात्पापसन्ततः । तस्मात्मुद्रेतिसाख्याता सर्वकामार्थसाधनी ॥

मुद्राङ्कितः । त्रि० मुद्रिते । मुद्रया चिह्निते । मोहरकियो० इ० भा० प्र० ॥

मुद्रालिपिः । स्त्री० पञ्चधालिप्यन्तर्गतलिपिविशेषे । छापेकाअक्षर० इतिभाषा

मुद्रिका । स्त्री० स्वर्णरूप्यादिनिर्म्मितमुद्रायाम् ॥

मुद्रितः । त्रि० अप्रफुल्ले सङ्कुचिते । निद्राणे । मीलिते । मुदा० इ० भा० ॥ मुद्राङ्किते

मुधा । अ० व्यर्थे ॥ मुह्यति मुह वै चित्ये । काप्रत्ययः । पृषोदरादित्वात्हस्यधः

मुनिः । पुं वशिष्ठादौ ॥ वाचंयमे । मौनिनि ॥ ज्ञानातिशयवति ॥ मननशीले । विवेकिनि । सनन्या

सिमि । परमार्थतत्त्वस्यमननमाम्न निरितिशास्त्रकृतांव्युत्पत्तिर्नेतत्ता । जन : शास्त्रविदपितत्त्वज्ञानाभावात् । सदामननशीलोयोजीवन्मुक्तामुनि : सहि । स्थितप्रज्ञादिभि : शब्दैर्मोक्षशास्त्रेषुवर्ण्यते ॥ दु : खेष्वनुद्विग्नमना : सुखेषुविगतस्पृह : । वीतरागभयक्रोध : स्थितधीर्मुनिरुच्यते ॥ मौनान्नमुनिर्भवतिनारण्यवसनान्मुनि : । स्वलक्षणन्तुयोवेदसमुनि : श्रेष्ठउच्यते ॥ अगस्त्ये ॥ बुधे ॥ मन्यते । मन ज्ञाने । मनेरुच्च तीन्० उपधाया उत्वञ्च । किदित्यनुवृत्तेर्नान्नगुण : ॥ वङ्कसेने । अगस्त्यद्रुमे ॥ अर्हति । पियाले । किंशुके ॥ दमनकवृक्षे ॥ सप्ताह्वे

मुनिखर्जूरिका : स्त्री० खर्जूरीप्रभेदे ॥

मुनिच्छद : । पुं० सप्तच्छदवृक्षे ॥

मुनितरु : । पुं वकवृक्षे

मुनिद्रुम : । पुं० वकपुष्पे । वङ्कसेने । अगस्तिया० हि० भा० प्र० वृक्षे ॥ श्योनाकवृक्षे ॥ मुनिसंज्ञकोद्रुम : । शाकपार्थिवादि : ॥

मुनिनिर्म्मित : । पुं० डिण्डिशे । डिंडसो० टिंडा० इ० प्र० फलशाके ॥ मुनिनानिर्मित : ॥

मुनिपिप्पलम् । न० ताम्रे ॥

मुनिपुत्र : । पुं० दमनकद्रुमे । ऋषिसुते ॥

मुनिपुत्रक : । पुं० भद्रनामनि । खञ्जने

मुनिपुष्प : । पुं० अगस्तिद्रुमे ॥ न० अगस्त्यपुष्पे

मुनिपूग : । पुं० रामपूगे । कामीगे ॥

मुनिभेषजम् । न० आगस्त्यहरीतक्याम् । अगस्तिपथ्यायाम् ॥ लङ्घने ॥

मुनिव्रत : । त्रि० उपशान्ते ॥ मुनीनांव्रतमस्य ॥

मुनिसुव्रत : । पुं० सुव्रताख्ये बुद्धभेदे ॥

मुनिस्थानम् । न० आश्रमे ॥

मुनीन्द्र : । पुं० श्रीघने । बुद्धे । जिने ॥ मुनिष्विन्द्र : श्रेष्ठ : ॥

मुन्यन्नम् । न० नीवारादौ ॥ मुनेर्वानप्रस्थस्य अन्नम् ॥

मुमुक्षु : । पुं० यतौ । संसारग्रन्थिभेदनेकृतप्रयत्ने ॥ साधनचतुष्टयसम्पन्ने ॥ यथा । काव्यनाटकतर्कादीनभ्यस्यतिनिरन्तरम् । विजिगीषुर्यथातद्वन्मुमुक्षु : स्वंविचारयेदिति ॥

मुमुक्षुता । स्त्री० मोक्षेच्छायाम् ॥ संसारबन्धनिर्मुक्ति : कथंस्यान्मेकधाविधे । इतियासुदृढाबुद्धिर्व

कव्यासामुमुक्षुता ॥ मुमुक्षोर्भावः तल् ॥

मुमुक्षुत्वम् । न॰ मुमुक्षुतायाम् ॥ वैराग्यस्य मुमुक्षुत्वं तीव्रं यस्यतु विद्यते । तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः ॥ मोक्षेच्छा मोक्षविषयेच्छा॰ तद्वत्त्वम् मुमुक्षुत्वं । भावे त्व: ॥

मुमुचान: । पुं॰ मेघे ।

मुमुषिषु: । त्रि॰ चौरे ।

मुमूर्षु: । त्रि॰ आसन्नमृत्यौ । मर्तुमिच्छौ । सन्नन्तान्मृङ: समाशंसभिक्षउ: ॥

मुर: पुं॰ दैत्यविशेषे । मुरति । मुरसंवेष्टने । इगुपधत्वात्क: ॥ न॰ वेष्टने ॥

मुरज: । पुं॰ मृदङ्गे ॥ मुरणम् । मुर॰ । तुदादि: । घञर्थेकविधानमितिक: । मुरंवेष्टनंजातमस्य ॥

मुरजफल: । पुं॰ पनसवृक्षे । मुरजसदृशानिफलानियस्यस: ॥

मुरजबन्ध: । पुं॰ चित्रकाव्यविशेषे ॥

मुरण्ड: । पुं॰ लम्पाकदेशे । तद्देशस्थे तुमुरण्डा: ॥

मुरन्दला । स्त्री॰ मुरलानद्याम् ॥

मुरमर्द्दन: । पुं॰ विष्णौ ॥

मुररिपु: । पं॰ विष्णौ । मुरस्यरिपु: ॥

मुरला । स्त्री॰ मुरन्दलायांसरिति । मुरली । स्त्री॰ वंशीवाद्ये । वंशिकायाम् ॥ इतिशब्दरत्नावली ॥

मुरलीधर: । पुं॰ श्रीकृष्णे ॥

मुरद्रा । पुं॰ केशवे । विष्णौ ॥

मुरा । स्त्री॰ स्वनामख्यातप्रसिद्ध गन्धद्रव्ये । तालपर्ण्याम् । गन्धकुट्याम् । मुरातिक्ताहिमास्वाद्वीलघ्वीपित्तानिलापहा । ज्वरासृग्भूतरक्षोघ्नीकुष्ठकासविनाशिनी ॥ मुरति । मुर॰ । इगुपधत्वात्क: टाप् ॥

मुरारि: । पुं॰ श्रीकृष्णे ॥ मुरस्यअरि: । मुर: क्लेशवस्तापिकमंभोगेवकर्मिणाम् । दैत्यभेदेप्यरिस्तेषांमरारिस्तेनकीर्त्तित: ॥

मुरु: । पुं॰ लौहविशेषे ॥

मुर्भिणी । स्त्री॰ अङ्गारधान्याम् ॥

मुर्म्मुर: । पुं॰ तुषवह्नौ ॥ मन्मथे ॥ रविवाजिनि ।

मुलतान: । पुं॰ देशविशेषे ॥ करतोयांसमारभ्यहिङ्गुलाजान्तकंशिवे । मुलतानदेशोदेवेशिमहार्म्लेच्छपरायण: ॥

मुशटी । स्त्री॰ सितकङ्गुन्याम् ॥

मुशल: । पुं॰ न॰ मुसले । मुष्यत्यनेनवा । मुसखण्डने । उज्ज्वलदत्तादयोमुंतालव्यमध्यमाहुस्तेतोषवादित्वात्कल: ॥

मुशलिका । स्त्री॰ पत्राम् । इतिहलायुध: ॥

मुशली । स्त्री० पल्ल्याम् ॥ तालमूल्याम् ॥ इ० राजनिर्घण्ट : ॥

मुषल : । पुं० न० मुसले ॥ मुषलमेमश । मुषखण्डने० इतिधातोर्मत्यान्तं षमूर्द्धन्यान्तं षुषबोपदेवाचेयादिभि : पठितन्त्वात्कल : ॥

मुषा । स्त्री० मूषायाम् ॥ मुष्णाति । मुषस्तेये । भिदाद्यङ् । टाप् ॥

मुषित : । त्रि० वञ्चिते ॥ हृते ॥ खण्डिते । मुष्यतेस्म । मुषस्तेये । क्त : । नमुषितांस्त्रियंप्रेषेत । व्यमुषितेवमुषिताचौरेहृंतवस्त्रे व० नग्ने स्वयं इतिव्याख्येयम् ।

मुष्क : । पुं० अण्डकोषे । वृषणे ॥ मुष्णातिरेत : । मुष० । सृवृभूशुषिमुषिभ्य : कक् ॥ सङ्घाते । मोचकवृक्षे । मुष्कके ॥ मुष्कत्रयस्तुद्विविध : श्वेतकृष्णप्रभेदत : ॥ तस्करे ॥ मांसले ॥

मुष्कक : । पुं० घण्टापाटलौ । गोलीठे । मुष्के । भाटले । मोचे ॥ मुष्कक : कटुकस्तिक्तोग्राह्युष्ण : कफवातहृत् । विषमेदोगुल्मकण्डूवस्तिरुक्शुक्रमिशुक्रनुत् ॥ मुष्णाति रोगम् । मुषे : ककन्तात्० स्वार्थे कन् ॥

मुष्कर : । पुं० समुष्के ॥ प्रलम्बाण्डे ॥ मुष्कोण्ड : । मोस्यास्ति । ऊष सुषीतिर : ॥

मुष्कशून्य : । पुं० वृषणरहिते । अनुपस्थे । स्त्रीस्वभावे । महल्लिके । राज्ञोन्त : पुररक्षके । खोजा० भाषा ॥

मुष्ट : । त्रि० चोरिते ॥ मुषित : ॥

मुष्टि : । पुं० स्त्री० पलपरिमाणे । चारतोला इतिभाषा ॥ बद्धपाणौ । मुठी० इ० भा० । अङ्गुलिसन्निवेशोमुष्टि : ॥ यथा । धासमुष्टिं परगवेसान्नंदद्यात्सय : सदा । अकृत्वास्वयमाहारं स्वर्गंलोकंसगच्छतीतिश्रीमहाभारतम् ॥ त्सरौ । मूठ० इतिभाषा ॥ धान्यमानभेदे । कुञ्च्यष्टभागे । छटांक० इ० भा० ॥ मोषणे । सङ्कोपने । मुष्यतेनया । मुष० । क्तियांक्तिन् ॥ यद्वा । मुष्णाति । क्तिच् ॥ प्रकारविशेषे । मुक्की इतिभाषा ॥ पथिक्षुधार्तस्य तिलादीनांमुष्टिग्रहणे चौर्याभावो यथा । तिलमुद्गयवादीनांमुष्टिर्ग्राह्यापथिस्थितै : । क्षुधार्तैर्नान्यथा विप्रविधिविद्भिरितिस्थिति : ॥

मुष्टिक : । पुं० कंसासुरस्यमल्लविशेषे ॥ स्वर्णकारे ॥

मुष्टिकान्तक : । पुं० बलदेवे ॥ मुष्टिकस्यअन्तक : ॥

मुष्टिद्यूतम् । न० जुआके । द्यूतप्रभेदे ॥

मुष्टिन्धय : । पुं० बालके ॥ मुष्टिंध

यति । घेट् पाने । नाडीमुष्ट्यो श्चेति० खश् । मुम् ॥

मुष्टिबन्ध : । पुं० सङ्ग्रहे । मुष्टिबन्धनक्रियायाम् ॥ षष्ठीतत्पुरुषम् मुष्टिबन्ध : ॥ मुष्टेर्बन्ध : ॥ मुष्टिनाबन्धोदृढग्रहणं वा ॥

मुसल : । पुं० न० अयोग्रे । कण्डनीयदण्डे । मूसर० मूसल० इ० भा० ॥ मुस्यत्यनेनवा । मुसखण्डने । वृषादिभ्यश्चेतिकल : ॥

मुसली । पुं० हलिनि । बलदेवे ॥ मुसलमस्त्यस्य । अतइनिठनाविति : ॥ यथोक्तं विष्णुपुराणे जरासन्धयुद्धोद्योगे । हलञ्चबलभद्रस्यगगनादागतं ज्वलत् । मनसोभिमतं विप्रसौनन्दं मुसलं तथेति ॥

मुसली । स्त्री० तालमूल्याम् ॥ तालमूलीतुविद्वद्भिर्मुसलीतिनिगद्यते ॥ मुसलीचद्विधाप्रोक्ताश्वेताचापरसंज्ञका । श्वेतातालप्यगुणोपेता अपराचरसायनी ॥ मुसलीमधुरावृष्यावीर्योष्णावृंहणीगुरु: । तिक्तारसायनीहन्तिगुदजान्यनिलं तथा ॥ आखुपर्ण्याम् ॥ गृहगोधिकायाम् ॥ मुष्णाति० मुसतिसंग्रयं वा । मुस० । वृषादिभ्यश्चित्कल : । जातेरितिगौरादित्वाद्वाङीष् ॥

मुसलीय : । त्रि० मुसल्ये ॥ मुसलायहित : । विभाषाहविरपूपादिभ्यइतिपक्षे छ : ॥

मुसल्य : । त्रि० मुसलेनवध्ये ॥ दण्डादिभ्योयत् ॥ मुसलीये । मुसलायहित : । अपूपादित्वात्पक्षे यत् ॥

मुस्त : । पुं० न० मुस्तके । मोथा० इ० भा० ॥

मुस्तक : । पुं० न० मुस्ते । कुरुविन्दे । मेघनामनि । मुस्तायाम् । मोथा० इ० भा० ॥ मुस्तं कटुहिमं ग्राहितिक्तं दीपनपाचनम् । कषायं कफपित्तास्त्रतृड्ज्वरारुचिजन्तुहृत् ॥ अनूपदेशेयज्जातं मुस्तकंतत्प्रशस्यते । तत्रापिमुनिभि : प्रोक्तं वरं नागरमुस्तकम् ॥ मुस्तसङ्घाते । चु० । ण्वुल् ॥

मुस्ता । स्त्री० मुस्तके । मोथाख्यतृणे ॥ मुस्तयति । मुस्त० अच् । टाप् ॥

मुस्ताद : । पुं० शूकरे ॥ मुस्तामत्ति । अद० । कर्मण्यण् ॥

मुस्ताभम् । न० मुस्तकविशेषे । कुटन्नटे । नागरमोथा० इ० भा० ॥

मस्तु : । पुं० मुष्टौ ॥

मुस्तम् । न० अश्रुणि ॥ मुस्यति । मुस० । मुसेरक्वाहुलकात् ॥ मुस्रे ॥

मुहिर : । पुं० कामे ॥ मूर्खे ॥ मुह्यति । मुहवैचित्त्ये । इषिमदि

मुहीत्यादिनाकिरच् ॥

मुहुर्भाषा । स्त्री॰ पुनः पुनः कथने । अनुलापे ॥ मुहुर्भाषणम् । भाष॰ अञ् ॥

मुहुः । अ॰ पौनःपुन्ये । मोहनम् । मुह॰ । मुहेः किच्चेत्युसिः ॥ पुनरर्थे ॥

मुहूर्त्तः । पुं॰ न॰ द्वादशक्षणात्मके काले ॥ त्रिंशत्कालात्मकेकाले ॥ दण्डद्वयात्मकेकाले ॥ मुहूर्त्तं घटिकाद्वयमित्युक्तः ॥ अक्षिपक्ष्मपरिक्षेपोनिमेषः परिकीर्त्तितः । द्वौ निमेषौत्रुटिर्नामद्वेत्रुटीतुलवः स्मृतः ॥ द्वौलवौक्षणइत्युक्तः काष्ठाप्रोक्तादशक्षणाः । त्रिंशत्काष्ठाकलाप्रोक्ताकलास्त्रिंशन्मुहूर्त्तकः ॥ पुराणोक्तलक्षणन्तु । रौद्रः श्वेतस्तथामैत्रस्ततः सारभटः स्मृतः ॥ सावित्रोवैश्वदेवश्चगान्धर्वः कुतपस्तथा । रौहिणस्तिलकश्चैवविजयोनिरृतिस्तथा ॥ संवरोवरुणश्चैवभगः पञ्चदशस्मृतः ॥ इति दिनपञ्चदशभागैकभागे ॥ यथा । प्रातःकालोमुहूर्तांस्त्रीन्सङ्गवस्तावदेवतु । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ॥ सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्रनकारयेत् । राक्षसीनामसावेलागर्हिता सर्वकर्मसु ॥ हूर्च्छति । हूर्च्छाकौटिल्ये । अस्माल्लिङ्घोह्र्मौहूर्त्तिकइतिनिर्द्देशान्मुहूर्त्तशब्दोनिष्पन्नः ॥ अल्पकाले ॥ दिनस्य त्रिंशद्भागे । लक्षणयातदुपलक्षिते काले ॥

मुहिरः । त्रि॰ मूर्खे ॥ मुह्यति । मुह॰ । मूलेरादयश्चेतिसाधुः ॥

मुह्यमानः । त्रि॰ अनेकानर्थप्रकारैरविवेकतयाविक्षिप्तचित्ततयाचित्तामापद्यमाने ॥

मूः । स्त्री॰ बन्धने ॥

मूकः । पुं॰ जलेशये । मत्स्ये ॥ दैत्ये ॥ त्रि॰ अवाचि । वर्णानुच्चारके ॥ दीने ॥ मूमितिकायति । कै॰ । आतोनुपेतिकः ॥

मूढः । त्रि॰ तन्द्रिते ॥ बाले । जडे ॥ मूर्खे । यथाजाते ॥ स्वाज्ञानकार्यविपर्ययसमोहव्याप्ते ॥ इदमर्थसाधनमिदमनर्थसाधनमितिविवेकशून्ये । अविचारके । अविवेकिनि । अनात्मविदि ॥ तन्द्रादिग्रस्तचित्ते । तमसाच्छन्ने । मोहयुक्ते ॥ चित्तस्यद्वितीयायांभूमौ ॥ मुह्यतिस्म । मुह॰ । गत्यर्थेतिक्तः ॥ आकाशादिषुस्थूलेषुकेचित्तमः प्रधानतयामूढाः मोहप्रकाशकाः विषमाः गुरवः केचिद्विशेषास्ते मूढाः कथ्यन्ते ॥

मूढग्राहः । पुं॰ अविवेकातिशय

 

क्रतेदुराग्रहे ॥ ग्राहोग्रहणम् । मूढानांग्राहः ॥

मूढता । स्त्री० अकार्यपरिज्ञानत्वे ॥ अविवेकतायाम् ॥ यथा । यानं चितौयानगतस्यदेशोदेशेपिचान्यः पुरुषोनिविष्टः । ममत्वमुर्व्यां नतथा यथाऽस्मिन्देशेऽतिमात्रं वतमूढतेति ॥

मूढदृक् । त्रि० देहमानिनि । देहमात्मत्वेनाभिमन्यमाने ॥

मूढयोनिः । पुं० पश्वादौ ॥

मूढा । स्त्री० तामस्यांमनसोवृत्तौ ॥

मूतः । त्रि० बद्धे ॥ मूयतेस्म । मूङ् बन्धने । क्तः ॥ आलानपाशे ॥

मूत्रम् । न० प्रस्रावे । मूत्० पिसाब० इ० भा० ॥ मूत्र्यते । मूत्रप्रस्रवणे । घञ् ॥ मूत्रमिव्याहुरुदकंवस्तेस्रानिलनिर्गतम् ॥ यद्वा । मुच्यते यत् । मुच ल्ट्० । सिविमुच्योष्टेरूचेतिष्ट्रन् ॥ अथास्यगुणाः । गोमूत्रं कटुतीक्ष्णोष्णं क्षारं तिक्तं कषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत्कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक्कुष्ठनाशनम् ॥ कासश्वासापहं शोथकामलापाण्डुरोगहृत् । कण्डूकिलासगदशूलमुखाक्षिरोगान्गुल्मातिसारमरुदामयमूत्ररोधान् । कासं सकुष्ठजठरकृमि पाण्डुरोगान् गोमूत्रमेकमपिपीत मपाकरोति ॥ सर्वेष्वपिचमूत्रेषु गोमूत्रं गुणतोधिकम् । अतोविशेषात्कथनेमूत्रं गोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् । शूलगुल्मरुजानाहकामलापाण्डुरोगनुत् ॥ कषायं तिक्ततीक्ष्णञ्चपूरणात्कर्णशूलहृत् ॥ नरमूत्रं गरं हन्तिसेवितं तद्रसायनम् । रक्तपामाहरं तीक्ष्णं सक्षारलवणं स्मृतम् ॥ गोजाविमहिषीणान्तुस्त्रीणां मूत्रं प्रशस्यते । खरोष्ट्रेभनराश्वानां पुंसांमूत्रं हितं मतम् ॥ अथमूत्रपरीक्षा । वातेनपाण्डुरं मूत्रं रक्तं नीलञ्चपित्ततः । रक्तमेवभवेद्रक्तात् धवलंकफनिलंकफादिति ॥

मूत्रकृच्छ्रम् । न० प्रस्रावघटितरोगविशेषे । मूत्ररोधे । अश्मर्याम् । कृच्छ्रे ॥ मूत्रे कृच्छ्रमत्र ॥ अथास्य चिकित्सा । त्रिकण्टकारग्वधदर्भकाशयवासधात्रीगिरिभेदपथ्याः । निघ्नन्तिपीतामधुनाश्मरीञ्चसमीपस्थयोरपिमूत्रकृच्छ्रम् ॥ त्रिकण्टकादिक्वाथः ॥ १ ॥ एलाश्मभेदकशिलाजतुगोक्षुराणांमैर्वारुबीजलवणोत्तमकुङ्कुमानाम् । चूर्णानितण्डुलजलेलुलितानिपीत्वाप्रत्यक्षमृत्युरपिजीवतिमूत्रकृच्छ्री ॥ एलादिचूर्णम् ॥ २ ॥ अयोरजः

सूक्ष्मपिष्टं मधुनासह्योजितम् ।। मूत्रकृच्छ्रं निहन्त्याशुसंलीढं दिवसत्रयम् ॥ ३ ॥ गुडेनमिश्रितंक्षीरं कटूष्णं कामतः पिबेत् । मूत्रकृच्छ्रेषु सर्वेषु शर्करायाश्चनिःसृतः ॥ ४ ॥ धात्रीरसंचेक्षुरसंपिबेद्वाकृच्छ्रे सरक्तं मधुनाविमिश्रम् । शल्याभिघातोत्थितमूत्रकृच्छ्रेकार्याक्रियामारुतकृच्छ्रतुल्या ॥ ५ ॥ क्वाथोगोक्षुरबीजस्ययवक्षारसमन्वितः । पीतः प्रशमयत्येवकृच्छ्रंविड्धारणोत्थितम् ॥ ६ ॥ त्रिफलायाः सुपिष्टायाः कल्कंकोलसमन्वितम् । वारिणालवणीकृत्यपिबेन्मूत्ररुजापहम् । कोलंबदरम् ॥ ७ ॥ गुडमामलकं-वृष्यंश्रमघ्नंतर्पणंप्रियम् । पित्तासृग्दाहशूलघ्नंमूत्रकृच्छ्रहरंपरम् ॥ ८ ॥ सपादश्चाणतुलितोयवक्षारः सितायुतः । भक्षितोनाशयत्येवमूत्रकृच्छ्रंनसंशयः ॥ ९ ॥ द्राक्षासितोपलाकल्कः पीतः कर्षमितोनरैः ॥ मस्तुनापलमात्रेणमूत्रकृच्छ्रंव्यपोहति ॥ १० ॥ समूलगोक्षुरक्वाथः सितामाक्षिकसंयुतः । नाशयेन्मूत्रकृच्छ्राणितथैवोष्णसमीरणम् ॥ उष्णसमीरणंउष्णवातंमूत्राघातविशेषम् ॥ इतिभावप्रकाशः ॥

मूत्रदोषः । पुं० प्रमेहे ॥

मूत्रनिरोधः । पुं० मूत्रप्रतिबन्धकरोगविशेषे ॥ यथा । पिष्टंवैमालतीमूलंग्रीष्मकालेसमाहृतम् ।साधितं छागदुग्धेनपीतंशर्करयान्वितम् ॥ हरेन्मूत्रनिरोधञ्चहरेद्वैपाण्डुशर्करां ॥

मूत्रपतन । पुं० गन्धमार्जारे ॥

मूत्रपुटम् । न० नाभेरधोभागे । मूत्राशये ॥

मूत्रफला । स्त्री० कर्कट्याम् ॥ त्रपुष्याम् ॥

मूत्रलम् । न० त्रपुषे ॥ त्रि० मूत्रवर्द्धके ॥

मूत्रला । स्त्री० कर्कट्याम् ॥ वालुक्याम् ॥

मूत्राघातः पुं० प्रस्रावरोधकरोगविशेषे ॥ प्रायोमूत्रविघाताद्यैर्वातकुण्डलिकादयः । जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥ मूत्रविघाताद्यैरित्याद्यशब्देनपुरीषशुक्रादिवेगविघातादीनांरूक्षाशनादीनाञ्चग्रहणम् । मूत्रविघाताद्यैः कुपितैर्दोषैरित्यन्वयः ॥ ननुमूत्रकृच्छ्रमूत्रघातयोः कोभेदः ॥ उच्यते । मूत्रकृच्छ्रे कृच्छ्रमधिकंविबन्धोऽल्पः । मूत्राघातेतुविबन्धोवलवान् कृच्छ्रमल्पमित्यनयोर्भेदः ॥ अस्यचिकित्सायथा । नलकुशकाशेक्षुवलाक्वाथंप्रातः सुशीतलंससितम् । पिबतीनश्यतिनियतंमूत्रग्रहस्त्वाच-कवि : ॥ काविः शुक्रः । कर्पूरर-

जसायुक्तावस्त्रवर्ति : शनैः शनैः ।
मेढ्रमार्गान्तरेन्यस्तामूत्राघातंव्यपो
हति ।। धान्यगोक्षुरकः क्वाथः क
ल्कसिद्धं हितंघृतम् । मूत्राघाते-
मूत्रकृच्छ्रे शुक्रदोषेचदारुणे ।। धान्य
गोक्षुरकं घृतम् ॥ मूत्रकृच्छ्रे श्मरी
रोगेभेषजं यत्प्रकीर्त्तितम् । मूत्राघा
तेषु सर्वेषु तत्कुर्य्याद्देशकालवित् ॥

मूत्रातिसारः । पुं० प्रस्रावातिसरण
रोगे ॥ तस्यौषधंयथा । बलामूल-
त्वचश्चूर्णंपीतंसक्षीरशर्करम् । मू
त्रातिसारं हरतिदृष्टमेतन्नसंशयइ-
ति ॥

मूत्रातीतः । पुं० मूत्ररोगविशेषे ॥
यथाहुः । चिरंधारयतोमूत्रंत्वरया
नप्रवर्त्तते । मेहमानस्यमन्दंवामू-
त्रातीतः सउच्यते ॥ इति ॥

मूत्राशयः । पुं० वस्तौ । मूत्र-
पुटे ॥

मूत्राशयपुटः । पुं० वस्त्याम् । मू-
त्रपुटे ॥

मूत्रितः । त्रि० कृतमूत्रोत्सर्गे । मी
ढे ॥ मूत्र्यतेस्म । मूत्र० । क्तः ॥

मूर्खः । पुं० पुरोषमे । माषे ॥ गाय
त्रीरहिते । सार्थगायत्रीरहिते ॥
त्रि० मन्दे । वैधेये । बालिशे ॥
शास्त्रज्ञानशून्ये ॥ शून्यवादिनि ॥
देहात्मवादिनि । अधीत्यवेदशास्त्रा
णिसंसारेरागिणश्चये । तेभ्यः प
रोनमूर्खोस्तिसधर्मः श्वानशूकरैः
॥ समद्वृतिशेषः । मानुष्यंदुर्लभं
प्राप्यवेदशास्त्राण्यधीत्यच । बध्यते
यदिसंसारेकोविविच्येत मानवः ॥
मुह्यति । मुह० । मुहेः खोमूर्च ॥
मूर्खोविषयप्रवासीसतिनिजविभवे
सज्जयोनास्तिगेहेनानाधान्यौषधी
नांसतिपितरिगृहेनार्जितायेनविद्या
। भार्य्यांत्यक्त्वासुरूपांरतिमिहकु
रुतेभर्त्तृमत्यांचदास्यांवाय्यांवैरा
भिलाषीकुमतिजनरुचिर्दक्तिराज
नृत्यगोयम् ॥ वाग्याम्० गीर्वाण
भाषायाम् । उत्कृष्टपुरुषार्थलाभे
सम्भवत्यधमंकामयमानोमूर्खः
॥ मूर्खसहस्रसंयोगोविषादपिसु
दुर्जरः । विज्ञेनसहसंयोगः सुधा
रससमः स्मृतः ॥ अत्रमूर्खनि
न्दादेवीभागवतेद्रष्टव्या ।

मूर्खता । स्त्री० मूर्खत्वे ॥ मूर्खस्य
भावः । तस्यभावस्त्वतलाविति त
ल् ॥

मूर्खत्वम् । न० मूर्खतायाम् । अ
सत्वे । मूरखपन्० इ० भा० ॥
मूर्खत्वंसुलभंभजस्वकुमते मूर्खस्य
चाष्टौगुणानिश्चिन्तोबहुभोजकोति
मुखरोरात्रिंदिवास्वप्नभाक् । कार्य्या
कार्य्यविचारणाद्विरहितोमानापमा
नेसमोद्दत्त्वासर्वजनस्यमूर्ध्निचर
णौमूर्खश्चिरंजीवतु ॥

मूर्छनम्। न॰ मूर्छायाम्॥ मूर्छापित्ततमः प्रायः॥

मूर्छना। स्त्री॰ गीताङ्गविशेषे। ग्रामस्यसप्तमभागे॥ चतुर्दशविधा याम्। षड्जादिस्वरसंपूर्णतायाम्। तदुक्तं शाण्डिल्येन। यत्रैव स्युः स्वराः पूर्णामूर्छनासेत्युदाहृतेति॥ अन्यवमूर्छनालक्षणं यथा। क्रमात्स्वराणांसप्तानामारोहश्चावरोहणम्। सामूर्छेत्युच्यते ग्रामस्थाएताः सप्तसप्त च। ग्रामत्रयेपिप्रत्येकंसप्तसप्ततुमूर्छना॰इत्येकविंशतिमूर्छनाभवंति।

मूर्छा। स्त्री॰ कश्मले। मोहे॥ संज्ञावहासुनाडीषु पिहितास्वनिलादिभिः। तमोभ्युपैतिसहसासुखदुःखव्यपोहकृत्॥ सुखदुःखव्यपोहाच्चनरः पततिकाष्ठवत्। मोहोमूर्छेतितांप्राहुः षड्विधासाप्रकीर्त्तिता॥ मूर्छनम्। मूर्छामोहसमुच्छ्राययोः। गुरोः श्चहलइत्यः। उपधायाश्चेतिदीर्घः। टाप्॥ इन्द्रियैः सहमनसउपरमोमूर्छेतिव्याख्यातारः॥

मूर्छायः। पुं॰ मूर्छायाम्॥

मूर्छालः। त्रि॰ मोहयुक्ते। मूर्छिते। मूर्छास्यास्ति। सिध्मादिषु॰ क्षुद्रजन्तूपतापयोश्चेतिपठितात्वाच्च। प्राणिस्थादातइतिनभवति॰ प्राण्यङ्गादेवेतिव्याख्यानात्॥

मूर्छितः। त्रि॰ मूर्ते। मूर्च्छायुक्ते। मूर्छाले। विचेतने॥ सोच्छ्राये॥ मूढे॥ वृद्धे॥ मूर्छितस्म। मूर्छा॰। गत्यर्थेतिक्तः॥ मूर्छासञ्जाताऽस्य वा। तारकादित्वादितच्॥

मूर्त्तः। त्रि॰ मूर्छाले। मूर्छिते॥ कठिने॥ मूर्त्तिमति॥ सन्निवेशेनैवहश्यायस्यतन्मूर्त्तमुच्यते। चित्यम्बुग्निवयंमूर्त्तममूर्त्त्वितरद्वयम्॥ मूर्छतिस्म। मूर्छा॰। अकर्मकत्वात्क्तः। राल्लोपः। नध्याख्येतिनत्वंन॥ न्यायमते॰ पृथिवी॰ जलं॰ तेजः॰ वायुः मनश्च। एषांगुणाः रूपं॰ रसः॰ गन्धः स्पर्शः॰ परत्वम्॰ अपरत्वम्॰ गुरुत्वम् स्नेहः॰ वेगश्च मूर्त्तामूर्त्तसाधारणगुणाः। सङ्ख्या॰ परिमितिः॰ पृथक्त्वम्॰ संयोगः॰ विभागश्च इतिभाषापरिच्छेदः॰॥

मूर्त्तवित्। त्रि॰ आगमिके॥ त्रिशूलधारीमहेश्वरः शङ्खचक्रादिधारीविष्णुर्वापरमार्थोभवतीत्यागमिकाः कल्पयन्ति। तत्त्वतेषांकल्पनम्॰ भ्रान्तिमात्रम्। अस्मदादिशरीरवत्तस्यापिशरीरस्यपाञ्चभौ

तिकत्वात्लीलाविग्रहकल्पनञ्च ० विग्रहाभावे लीलायोगादयुक्तमेव ॥

मूर्त्तिः । स्त्री० काठिन्ये ॥ प्रतिमायाम् । असर्वगतस्य द्रव्यस्य परिमाणे ॥ शिवस्याष्टमूर्त्तयो यथा । सर्वं क्षितिः समुद्दिष्टाभवो जलमुदाहृता । रुद्रोऽग्निरुग्रो वायुः स्यात् भीम आकाशशब्दिता ॥ पशोः पतिर्यजमानो महादेवः सुधाकरः । ईशानः सूर्य इत्येता मूर्त्तयोऽष्टौ प्रकीर्त्तिताः ॥ मूर्त्तिर्द्धर्मस्य पत्नी । यथा । मूर्त्तिश्च धर्मपत्नी सा कान्तिरूपा मनोहरा । कान्तिरूपा शोभा रूपा । परमात्मा च विश्वौघो निराधारो यया विना ॥ शोभाविना परात्मापि निराधारो निरर्थकश्च स्वर्थः ॥ सर्वत्र शोभारूपा च लक्ष्मीमूर्त्तिमती सती । श्रीरूपा मूर्त्तिरूपा च मान्या धन्याति पूजितेति भागवते ८ स्कन्धे १ ध्यायः ॥ काये । देहे । जरायुजाण्डजोद्भिज्जादिभेदेन विलक्षणविविधसंस्थानासु तनुषु ॥ मूर्च्छति० मूर्च्छतेर्वा । मूर्च्छा० । क्तिन् । राल्लोपः ॥ रूपे ॥ स्वभावे ॥ लग्ने ॥

मूर्त्तिमान् । त्रि० कठिने । मूर्त्तिविशिष्टे ॥ मूर्त्तिः काठिन्यमस्यास्ति । तदस्यास्त्यस्मिन्निति मतुप् ॥ स्त्रियाम्० मूर्त्तिमती । उगित्त्वान्ङी

प् ॥ न० शरीरे ॥

मूर्त्त्युपचयः । पुं० स्थौल्ये ॥

मूर्द्धकः । पुं० क्षत्रिये ॥

मूर्द्धकर्परी । स्त्री० जलच्छायाम् ॥

मूर्द्धखोलम् । न० छत्रे ॥

मूर्द्धजः । पुं० केशे ॥ त्रि० मूर्द्धिजाते ॥

मूर्द्धतैलम् । न० तैलविशेषे ॥ अभ्यङ्गः परिषेकश्च पिचुर्वस्तिरिति क्रमात् । मूर्द्धतैलं चतुर्द्धा स्यादबलवत् तद्यथोत्तरं ॥

मूर्द्धा । पुं० उत्तमाङ्गे । शिरसि । मस्तके ॥ छात्राः कारैः शिरोभिस्तु नृपानिम्नशिराधनौ । चिपिटैस्तु पितुर्मृत्युर्गबाढ्याः परिमण्डलैः घटमूर्द्धापापरुचिर्धनाढ्यैः परिवर्ज्जितः ॥ मुह्यत्यस्मिन्नाहते । मुह० । श्वन्नुक्षन्निति० मुहेः कनिन्० निपातनादुपधादीर्घो धिञ्शादेशो रमागमश्च ॥

मूर्द्धन्यः । त्रि० मूर्द्धनिभवे ॥ शरीरावयवाच्चेतियत् । येचाभावकर्मणोरिति प्रकृतिभावान्नस्तद्धितइति० टिलोपाभावः ॥

मूर्द्धपुष्पः । पुं० शिरीषवृक्षे ॥

मूर्द्धरसः । पुं० भक्तफेने ॥

मूर्द्धवेष्टनम् । न० उष्णीषे ॥

मूर्द्धाभिषिक्तः । पुं० भूपाले । राजनि ॥ क्षत्रिये । राजन्ये । बाहुजे ॥

मूर्द्ध्नि० अभिषिच्यतेस्म। षिचक्ष रणे। क्तः। राज्यदानसमये० मूर्द्धन्यभिषिच्यते० तत्प्रभवत्वात्स र्वोपिक्षत्रियोमूर्द्धाभिषिक्तउच्यते॥ मन्त्रिणि॥ प्रधाने॥ मूर्द्धन्यभिषिक्तः। वर्णसङ्करजातिविशेषे। विप्रात्क्षत्रियायाम्जाते॥

मूर्धावसिक्तः। पुं० ब्राह्मणात्परिणीतक्षत्रियायामुत्पन्ने॥ अस्यवृत्तिस्तु। हस्त्यश्वरथशिक्षाचअस्त्राणांधारणंतथा। मूर्धावसिक्तस्य वृत्तिः प्रोक्ताउशनसाशुभा॥

मूर्वा। स्त्री० लताविशेषे। देव्याम्। मधुरवायाम्। मोरटायाम्। मुरहरा० इ० भा० प्र०। धनुर्गुणोपयुक्ता० मुरगा० इ० गौ० भा० प्र० मूर्वासरागुरुः स्वादुस्तिक्ता- पित्तास्रमेहनुत्। त्रिदोषतृष्णाहृ- द्रोगकण्डूकुष्ठज्वरापहा। मूर्वति। मूर्वोबन्धने। अच्।

मूर्विका। स्त्री० मूर्वायाम्॥ मूर्वैव। स्वार्थेकन्॥

मूलम्। न० शिफायाम्॥ ब्रध्ने। अङ्घ्रिनामके। जड० इ० भा०। मूलमात्रे यथा। अर्थस्यमूलं निकृतिः क्षमाचकामस्यमूलञ्चव पुर्वयश्च। धर्मस्ययागादिदयादमश्च मोक्षस्यसर्वोपरमः क्रियाभ्यः॥ आद्ये। प्रथमे॥ यथा। मूलप्रकृति। मूलवित्ते॥ भे॥ निकुञ्जे॥ निजे॥ चरणे॥ टीकार्हग्रन्थे। शूरणे॥ पिप्पलीमूले॥ पुष्करमूले॥ विशेपमूलस्यान्वेषणे निषेधोयथा। नदीनामग्निहोत्राणांभारतस्यकुलस्यच। मूलान्वेषोनकर्त्तव्योमूलाद्दोषोमहीयते॥ पुं० न० अन्तिके। पार्श्वे। नक्षत्रविशेषे॥ यथा। हस्तास्वातिश्रवणाअश्वीविमृगशिरोनपुंसिस्यात्। पुंसिपुनर्वसुपुष्योमूलन्त्वशेषास्त्रियांशेषाः॥ निर्ऋतिदेवताकेनक्षत्रे॥ अस्मिन्जातस्यफलंयथा। मूलविरुद्धावयवंसमूलंकुलंदहत्ये षवदन्तिसन्तः। चेदन्यथातः पुरुषाविशेषात् सौभाग्यमायुश्चकुलानुवृद्धिः॥ मूलमन्त्रे॥ मूलति। मूलप्रतिष्ठायाम् मूलरोहणे वा। इगुपधेति कः॥ मवते। मूङ्बन्धने। मूश क्यन्बिभ्यः क्तः॥

मूलकः। पुं० स्थावरविषप्रभेदे॥

मूलकम्। न० मूलविशेषे। राजालुके। महाकन्दे। हस्तिदन्तके। मूली० इतिभाषाप्रसिद्धेकन्दे॥ अस्यगुणाः। मूलकंद्विविधंप्रोक्तं तत्रैकंलघुमूलकम्। शालामर्कटकंविस्रंशालेयंमरुसम्भवम्॥ चाणक्यमूलकंतीक्ष्णंतथामूलकपोतिका। नेपालमूलकंचान्यत्

तद्धवैहलवदम्लवत् ॥ लघुमूलकमु ष्णं स्याद्रुच्यं लघु च पाचनम्। दोष त्रयहरं स्वर्य्यं ज्वरश्वासविनाशनम् ॥ नासिकाकण्ठरोगघ्नं नयनामयनाशनम्। महत्तदेव रूक्षोष्णं गुरु दोष त्रयप्रदम् ॥ स्नेहसिद्धं तदेव स्यादो षत्रयविनाशनम्। तत्पुष्पं स्मृतं पि त्तघ्नं फलं वातकफप्रदमिति ॥ मूल ति। मूल०। क्वुन्। यद्वा मूलय ति। मूलरोहणे। चु०। ण्वु। संज्ञायां कन् ॥ यद्वा। मूले जातः। पूर्वाह्णापराह्णाद्रीमूलप्रदोषा वस्कराद्वुन् ॥

मूलकदण्डः। पुं० गांडर० गण्डल० ह्र० प्र० मूलकावयवे ॥ सपत्र स्वेदितस्तक्रे दण्डो मूलकसूक्ष्मकः। घृतेपक्वस्तु हिङ्ग्वाढ्येनवो भवि मिश्रितः ॥ सुरुच्यं मूलकं शाकं विष्टम्भिकफकारकम्। वातपित्त हरं स्निग्धमकृच्छ्रं स्वामगुणावहम् ॥

मूलकपत्रम्। न० मूलकस्यपत्रे ॥ पाचनं लघुरुच्योष्णं पत्रं मूलकजं न वम्। स्नेहसिद्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत् ॥

मूलकपर्णी। स्त्री० शोभाञ्जने ॥

मूलकमूला। स्त्री० चोरकपुष्पिका याम्। चोरीशब्दे ॥

मूलकर्म्म। न० कार्मणे। टोना० ह्र० भा० प्र० कर्मविशेषे। मूले ष्वोषधीमूले: कर्म० वासनोच्चाट नस्तम्भनवशीकरणादि० मूलकर्म्म। उपपातकविशेषण एतत्। यथा। सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त नम्। हिंसौषधीनां स्त्र्याजीवोऽ भिचारो मूलकर्म च ॥ इति मनुः। मूलकर्म्म मन्त्रौषधादिना वशीकर णमिति कुल्लूकभट्टः ॥

मूलकारः। पुं० मूलग्रन्थकर्त्तरि। मूलं करोति। कृञ्: कर्म्मण्यण् ॥

मूलकारिका। स्त्री० चुल्ल्याम् ॥ मूलग्रन्थार्थप्रकाशकपद्ये ॥ मूल धनस्य वृद्धिविशेषे ॥

मूलकृच्छ्रः। पुं० न० एकादशविध पर्णकृच्छ्रव्रतान्तर्गतव्रतविशेषे। यदा क्वथितानि मूलानि मासं पी यन्ते। तदा मूलकृच्छ्रव्यपदेशं लभ न्ते। यथाह मार्कण्डेयः। फलैर्मा सेन कथितः फलकृच्छ्रो मनीषिभिः। श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्मा क्षैरपरस्तथा ॥ मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम्। पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ॥ मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु० इति ॥

मूलजः। पुं० उत्पलादौ ॥ न० आ र्द्रके ॥ त्रि० मूलोद्भवे ॥

मूलत्रिकोणभवनम्। न० सूर्य्यादिग्रहा णां राशिरूपस्थानविशेषे ॥ यथा। सिंह

गोमेषतुलाधनुर्युकघटास्तथा । मूलत्रिकोणभवनान्याहुः सूर्यादितः क्रमात् ॥ एतेराशयः क्रमात् सूर्यादीनाम्मूलत्रिकोणभवनान्याहुः । यथा । सिंहः सूर्यस्यमूलत्रिकोणभवनम् । एवंवृषश्चन्द्रस्य•मेषः कुजस्य•कन्याबुधस्य•धनुर्गुरोः तुला•शुक्रस्य•कुम्भः शनेरिति ॥

मूलत्रिकोणांशः । पुं॰ रव्यादीनांत्रिकोणभागे । य॰ । रवियुग्मभार्कदिग्भूपालक्षितिभुग्वित्रिंशतिः । मूलत्रिकोणभागाः स्युः सूर्यादीनांयथाक्रमात् यथा । सिंहराशौसूर्यस्यविंशत्यंशामूलत्रिकोणभागाःस्युः । एवंचन्द्रस्यवृषेत्रयतृतीयांशत्रयाद्ध्वंसप्तविंशत्यंशाः कुजस्यमेषेद्वादशांशाः बुधस्यकन्यायांतुपञ्चदशांशाद्द्दशांशाः पञ्चविंशत्यंशपर्य्यन्तम् ० गुरोर्धनुषिदशांशाः शुक्रस्यतुलायांपञ्चदशांशाः शनेःकुम्भे विंशत्यंशाः मूलत्रिकोणभागाः स्युरिति ॥

मूलदेवः । पुं॰ मूलभद्रे । कंसासुरे ।

मूलद्रव्यम् । न॰ मूलधने ॥

मूलधनम् । न॰ वणिङ्मूलवित्ते । नीव्याम् । परिपणे । पूंजी॰इ॰भा॰ । मूलघ्नतद्धनस्य ॥

मूलनगरम् । न॰ राजधान्याम् ॥

मूलपर्णी । स्त्री॰ मण्डूकपर्ण्याम् ॥

मूलपुष्करम् । न॰ पुष्करमूले ॥

मूलपोती । स्त्री॰ शाकप्रभेदे । क्षुद्रवल्ल्याम् । क्षुद्रपोतिकायाम् ॥

मूलप्रकृतिः । स्त्री॰ आद्यायांशक्तौ । प्रधाने । प्रकृतिः प्रधानम् । मूलत्वात्सौप्रकृतिश्चेतिविग्रहः । विश्वस्यकार्य्यकलापस्यसामूलम् •नस्य•श्चामूलान्तरमस्तिअनवस्थाप्रसङ्गात् । अचानवस्थायामस्तिप्रमाणम् ॥

मूलफलदः । पुं॰ पनसे । कण्टकिफले । मूले•फलंददाति । दुदाञ्॰ । कः ॥

मूलबन्धः । पुं॰ राजयोगाङ्गविधौ । यन्मूलंसर्वभूतानांयन्मूलंचित्तबन्धनम् । मूलबन्धः सदासेव्योयोग्योसौराजयोगिनाम् ॥

मूलभद्रः । पुं॰ कंसासुरे ॥

मूलरसः । पुं॰ मोरटलतायाम् ॥

मूलविभुजः । पुं॰ रथे ॥ मूलानिविभुजति । भुजोकौटिल्ये । मूलविभुजादित्वात्कः ॥

मूलस्तम्भः । पुं॰ स्थितिहेतौ ॥

मूला । स्त्री॰ शतावर्याम् ॥ मूलभे ॥

मूलाधारः । पुं॰ गुह्यलिङ्गयोर्मध्येऽङ्गुलिद्वयमितस्थाने । शरीरस्थसकलनाडीनाम्मूलस्थाने ॥ मूलमाधारषट्कानाम्मूलाधारंततोविदुरितिदेवीगीतोक्तेः ॥

मूलाविद्या । स्त्री० अनाद्यविवेके ॥ अयंजीवोनकूटस्थंविविनक्तिकदाचन । अनादिरविवेकोयंमूलाविद्येतिगम्यताम् ॥

मूलाह्वयम् । न० मूलके ॥

मूली । पुं० वृक्षे ॥

मूली । स्त्री० ज्येष्ठाम् ॥

मूलेरः । पुं० जटायाम् ॥ मूलति । मूल० । मूलेरादयश्चेति साधुः ॥

मूल्यम् । न० अवक्रये । वक्ले । मोल० निरख० हि० भा० दर० दाम० इतिसाधारणजनभाषा ॥ भृत्यायाम् । वेतने । महीमा० भाडा० हि० भा० । मूलेनआनाम्यम्०मूलेनसमंवा । नौवयोधर्मेत्यादिनायत् त्रि० मूलतउत्पाटनयोग्ये मुद्रादौ ॥ मूलमावर्हयस्य । मूलमस्यावर्हीतियत् ॥

मूषः । पुं० मूषिके ॥ तैजसावर्त्त्यां ॥

मूषकः । पुं० मूषिके ॥ मूषति । मूषस्तेयेदीर्घोपधोप्यस्ति । भ्वादिः । खलुसंज्ञायांक्वुन्वा ॥

मूषककर्णी । स्त्री० आखुपर्ण्याम् ॥

मूषकमारी । स्त्री० सुतश्रेण्याम् ॥

मूषका । स्त्री० मूषिकायाम् ॥

मूषिकारातिः । पुं० ओतौ । बिडाले ॥

मूषली । स्त्री० तल्यां ॥

मूषा । स्त्री० स्वर्णाद्यावर्त्तनपात्रे । तैजसावर्त्त्याम् ॥ देवताडे ॥ अन्तः शुषिरायांमृत्प्रतिमायाम् ॥ मूषति । मूष० । इगुपधेतिकः ॥ गवाक्षे ॥ यथा । एकद्वित्यादिमूषावहनमितिमहोन्नद्विमेभूमिभर्त्तुर्हर्म्येरम्येष्टमूषेचतुरविरचिते शुल्वशालाविशाले । इत्यादिलीलावत्यांश्रेढीव्यवहारः ॥

मूषाकर्णी । स्त्री० आखुपर्ण्याम् ॥

मूषातुत्थम् । न० कांस्यनीले । वितुन्नके । हेमतुत्थे ॥

मूषिकः । पुं० उन्दुरौ । आखौ ॥ अस्यमांसगुणाः । अहिनकुलशल्यगोधामूषिकमुख्याविलेशयाः कथिताः । श्वासानिलकासहरंतन्मांसंपित्तदाहकरम् ॥ अन्येविलेशयायेस्युः केकिडोन्दुरुकादयः । गर्हितंतस्यमांसञ्चमद्यगौरवदुर्जरम् ॥ अपिच । मूषकोमधुरः स्निग्धोव्यवायीबलवर्धनः ॥ पारिभाषिकोयथा । विभवेसतिमैवास्तिनदद्वातिजुहोतिच । तमाहुराखुंतस्यान्नंभुक्त्वाकृच्छ्रेणशुध्यति ॥ मुष्णाति । मुष० । मुषेर्दीर्घश्चेतिकिकन् ॥

मूषिकपर्णी । स्त्री० जलजवल्लिविशेषे । चित्रायाम् । उपचित्रायाम् । न्यग्रोध्याम् । मूषाकर्णीतिख्याता

याम् । इंरदुाकानीपामा०नू०गो० दे०भा० ॥ मूषिकपर्णमस्या : मूषिककर्णाकारपर्णत्वात् । पाककर्णेतिङीष् ॥

मूषिका । स्त्री० मूषिकपर्ण्याम् ॥ मूषकस्त्रियाम् ॥ अजादित्वाट्टाप् ॥ मूषायाम् ॥

मूषिकाङ्क : । पुं० गणेशे ॥

मूषिकाञ्चन : । पुं० विघ्नहारिणि । गणेशे ॥

मूषिकार: । पुं० आखौ । उन्दुरौ ॥ मूषिकाया : पुमान् । आरक्पुंसीत्यारक्

मूषिकाराति : । पुं० बिडाले ॥

मूषिकाह्वया । स्त्री० मृतश्रेण्याम् । मूषिकपर्ण्याम् ॥

मूषित: । त्रि० मुषिते । चोरिते । मूष्यतेस्म । मूषस्तेये । क्त : ॥

मूषिपर्णिका । स्त्री० मूषिकपर्ण्याम् ।

मूषी । स्त्री स्वर्णाद्यावर्त्तनभाजे । स्वर्णादिद्रवीकरणपात्रे । मूषायाम् ॥

मूषीक: । पुं० उन्दुरौ । मूषिके ॥

मूषीककर्णी । स्त्री० मूषिकपर्ण्याम् ॥

मूषीका । स्त्री० उन्दुरौ ॥

मृकण्ड : । पुं० मृकण्डुमुनौ ॥ अयमदन्तोमृगव्वादयश्चेतिसूत्रे०उज्ज्वलदत्तग्रन्थे स्पष्ट : ॥ मृकण्डस्यमुनेस्तीर्थंतस्याम्यामतिनिर्मलमितिस्कान्दोक्तेश्च ॥

मृकण्डु : । पुं० मृकण्डमुनौ ।

मृग . । पुं० आरण्यपशुमात्रे । करिविशेषे ॥ मृगशिरोनक्षत्र ॥ यथा मृगेगतस्त्वाश्विनेश्विस्त्वाऽऽदितीगच्छेज्जयेद्रिपूनिति ॥ एकदेशप्रयोगात् ॥ अन्वेषणे ॥ याच्ञायाम् ॥ मार्गशीर्षमासे ॥ यज्ञविशेषे ॥ मृगनाभौ ॥ मकरराशौ ॥ मृगयायाम् ॥ स्वनामप्रसिद्धे पशुविशेषे । कुरङ्गे । वातायौ । हरिणे । अजिनयोनौ ॥ अस्यमांसप्रकारगुणा: । मार्गमांसंबहुशकलितंखिन्नमौष्यतोयेतप्तेहिङ्गुरागसहितेपाचितंशब्दमुख्यै : । सान्द्रंसार्द्रंलवणसहितंदाडिमेनातियुक्तंखादन्खादन्कलयतिशिरश्चन्द्रचूडोपिनूनम् ॥ ऐणंमांसंहिमंग्राहिरुच्यंदोषत्रयापहम् । षड्रसंबलदंपथ्यंवृष्यंलघुज्वरापहम् ॥ मृग्यते । मृगअन्वेषणे । अदन्त : । घञ् । मृगोनवविधोयथा । सम्बरोरोहितोन्यङ्कु : कुरङ्ग : सुदृशोरुरु : । एणश्चहरिणश्चेतिमृगा : नवविधामता : ॥ पाठान्तरंयथा । रमृररोहितोन्यङ्कु : सम्बरोवभणोरुरु : । अश्वोथहरिणश्चेतिमृगा:नवविधामता: ॥ हारिणश्चापिविज्ञेय : पञ्चभेदोत्रभैरव । ऋष्य : खड्गोरुरुश्चैवपृषतश्चमृगस्तथा ॥ एतेवलिप्रदानेचचर्म

मृग :

दानिचकीर्त्तिता:॥ इतिकालिका पुराणे ६७ अध्याय : अथमृगपरीक्षा । मृगनाभिंसमादातुंकौतुकार्थंतथापुन : । मृगा : पोष्यामहीन्द्राणांतेषांवक्ष्यामिलक्षणम् ॥ पृथिव्यब्वायुगगनतेजोधिकास्तुपञ्चधा'भिद्यन्ते नैकभेदास्तुसमस्तामृगजातय : ॥ तद्यथा । येगन्धिन: क्षीणशरीरकर्णास्तेपार्थिवागन्धमृगा : प्रदिष्टा : । सर्वाङ्गमेषांसुरभिप्रकामंपुण्येप्रदेशेप्रभवन्तितेतु ॥ येवैविशालागुरुदीर्घशृङ्गाश्चमांसलास्तोयखुरादिशा : । आप्यास्तुतेवैप्रसरन्तिभूरिसर्वस्वदेशेप्रभवन्तिचैव ॥ धावन्तिवातमिवान्तरीक्षेदीर्घास्तुतेवातमृगा : प्रदिष्टा : । तेयत्रयत्रभवन्तिशक्तास्तत्रैवसर्वाणिशुभानिसन्ति ॥ लघुप्रमाणालघुवीर्यसत्वानिर्गन्धदेहाश्छगलप्रमाणा : । तेगागनावेगकरानराणांस्पृश्यानतेनापिनिरीक्षणीया : ॥ येकृष्णवर्णागुरुदीर्घशृङ्गा : क्रुद्धाभृशंयान्तिचवायुवेगा : । तैक्ष्णसारा : खलु तैजसास्तुपुण्यप्रदेशेप्रभवन्तितेतु ॥ भोजोप्याह ।पार्थिवादिमृग: सर्वश्चतुर्जातिर्भवेत्पृथक् । सुशृङ्गास्तनुलोमानोब्राह्मणामृगजातय : ॥ क्रुद्धा : पक्वरिशृङ्गाश्चक्षत्रिया : खरलोमशा:। आवर्त्तशृङ्गास्तनवो

मृग :

हरिणावैश्यजातय:॥ कुशृङ्गावाप्यशृंगावाशूद्रा:खरतनूरुहा:। यस्त्वानांयेगुणादोषा स्तेस्युर्याहरिणेष्वपि ॥ तथापिदोषा : पश्चामीवक्ष्यन्तेहरिणाश्रया : । मेषयोरन्तरेयस्यलोमावर्त्ता : सपापकृत् ॥ विषमोविकृतीशृङ्गीयस्यसचमनाशन : । आवर्त्त : पृष्ठतोयस्यत्रानाभिमभिविन्दति ॥ पश्चार्द्धयस्यवावर्त्तस्तौस्याज्यौभयकारकौ । वक्त्रेनेत्रपदादीनांवैकृताहननाशन : ॥ गार्ग्य : । दोषवन्मृगजातीनांभिजातीनामथापिवा। दर्शनात्स्पर्शनाच्चैवगन्धादानाच्चपोषणात् ॥ भवेयुर्विपद : सर्वास्तथाचैवाद्यपोषणात् ॥ शङ्खोपि । हरिणपोषणतोधरिणीभुजांनहिभवेन्मरुदुत्तवपीडनम् । नपविवह्निरुजारिपुजंभयंनदवतंहरिणंगुणिनंनृप:॥ इतिमृगपरीक्षा युक्तिकल्पतरौ ॥ चतुर्विधपुरुषेषुपुरुषविशेषे ॥ तल्लक्षणं यथा । वदतिमधुरवाणींदीर्घनेत्रोऽतिभीरुश्चपलमतिसुदेह : शीघ्रवेगोमृगोयम् ॥ शशकेपद्मिनीतुष्टामृगेतुष्टाचचित्रिणी। वृषभेशङ्खिनीतुष्टाहयेतुष्टाचहस्तिनी ॥ पद्मिनीशशयोर्योनिमेढ्रकौचतुरङ्गुलौ । चित्रिणीमृगयोर्योनिमेढ्रकौचतथाविधौ ॥ इ० रतिमञ्जरी ॥

मृगगामिनी । स्त्री० विडङ्गे ॥ मृगस्येवगमनशीलायाम् ॥

मृगचर्मजम् । न० जवादिनामकगन्धद्रव्ये ॥ त्रि० मृगचर्मजाते ॥

मृगचेटकः । पुं० खट्टासे ॥

मृगचेष्टितम् । न० मृगेङ्गिते ॥ तद्यथा । सीमागतावन्यमृगारुवन्तः स्थिताव्रजन्तोथसमापतन्तः । सम्प्रस्थतीतेष्वभयानिदीप्ताः कुर्वन्ति शून्यंपरितोभ्रमन्तः ॥ दीप्ताः भयंकुर्वन्तिआवेदयन्तीतिसर्वत्रान्वयोबोध्यः ॥ ते ग्राम्यसत्त्वैरनुदाच्यमानाभयायरोधायभवन्तिवन्याः । द्वाभ्यामपिप्रस्थतुवाशितास्ते बन्दिग्रहायैवमृगारुवन्ति ॥ वन्येसत्त्वेद्वारसंस्थे पुरस्यरोगोवाच्यःसंप्रविष्टे विनाशः । सूतेमृत्युः स्याच्चयंसंस्थितेचगेहंयातेबन्धनंसंप्रदिष्टम् ॥

मृगजम्बुः पुं० मृगापत्ये ॥

मृगजालिका । स्त्री० वागुरायाम् ॥

मृगजीवनः । पुं० व्याधे ॥ मृगाः जीवनमस्य ॥

मृगणा । स्त्री० अपहृतद्रव्यान्वेषणे ॥ मृग० । ण्यासेतियुच् ॥

मृगतृट् । स्त्री० मृगतृष्णायाम् ॥

मृगतृषा । स्त्री० मरीचिकायाम् ॥ मृगाणांतृषाअस्त्यस्याम् । अर्शआद्यच् । टाप् ॥

मृगतृष्णा । स्त्री० मरीचिकायाम् ॥ ग्रीष्मे मरुदेशेसिकतासुअर्करश्मयः प्रतिफलिताद्दूरस्थानांजलमितिबुद्धिविषयास्तासु मृगतृष्णाअस्त्यस्याम् । अर्शआद्यच् । टाप् ॥

मृगतृष्णिका । स्त्री० मृगतृष्णायाम् ॥ मृगतृष्णैव । स्वार्थेकन् ॥ रे चित्तचिन्तयचरं चरणौमुरारेः पारंगमिष्यसियतोभवसागरस्य । पुत्राः कलत्रमितरेसुहृदःसहायाः सर्वंविलोकयसखे मृगतृष्णिकाभम् ॥

मृगदंशकः । पुं० कुक्कुरे ॥ मृगान्दशति । दंशदशने । कर्मण्यण् । कः ॥

मृगधूर्त्तकः । पुं० गोमायौ । शृगाले ॥ मृगेषुधूर्त्तइव । संज्ञायां कन् ॥

मृगनाभिः । पुं० कस्तूर्याम् ॥ मृगस्य नाभिः ॥

मृगनाभिजा । स्त्री० कस्तूर्याम् ॥

मृगनेत्रा । स्त्री० रात्रिविशेषे ॥ त्वयापुत्रकनाधीतंमृगनेत्रासुरात्रिषु-तेनत्वं विदुषांमध्ये पङ्के गौरिवसीदसि ॥ मृगेनक्षत्रविशेषे नेत्रायस्याः । नेतुर्नक्षत्रे ऽब्वक्तव्यः ॥ योषित्प्रभेदे । मृगलोचनायाम् ॥ मृगस्यनेत्रे इवनेत्रे चक्षुषी यस्याः ॥

मृगपतिः । पुं० मृगेन्द्रे । सिंहे ॥

मृगपिप्लुः । पुं० पक्षजे । चन्द्रे । हि

मांशी ॥

मृगप्रियम् । न० पर्वततृणे ॥

मृगवधाजीवः । पुं० व्याधे ॥ मृगवध आजीवोयस्यसः ॥ मृगवधेनाजीवतिवा । जीव० । इगुपधेतिकः ॥

मृगबन्धनी । स्त्री० मृगबन्धनार्थंजालविशेषे । खावल० इ० पर्यन्त भा० ॥ वागुरायाम् ॥ मृगोबध्यतेऽनया । बन्धबन्धने । करणेल्युट् । ङीप् ।

मृगभक्ष्या । स्त्री० जटामांस्याम् ॥

मृगमदः पुं० कस्तूर्याम् ॥ मृगस्य मदः ॥

मृगमदवासा । स्त्री० कस्तूरीमल्लिकायाम् ॥

मृगमातृकः । पुं० मृगविशेषे ॥ स्याल्य : पृथूदरोऽच्चेयः शरभोमृगमातृकः । गुणैः शशिनसदृशोगदितो मृगश्चमातृकः ॥

मृगया स्त्री० आखेटने । मृगव्ये । आखेटे । खेटे । हेडा० इ० भा० ॥ अवलसकुलाशिनोझषान्निजनीडद्रुमपीडिनः खगान् । अनवद्यतृणार्दिनोमृगान्मृगयाघोदनभूभृतांमताम् ॥ इतिश्रीहर्षः ॥ मृगयन्ते मृगानस्याम् । मृग० । चु० आद न्तः । परिचर्य्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानमितिसाधुः ॥

मृगयुः । पुं० व्याधे । लुब्धके । हे डिया० इ० भा० प्र० । मांसविक्रयार्थंमृगादिपशुहन्तरि ॥ मृगान् वधार्थंयाति । या० । मृगय्वादित्वात्कुः ॥ गोमायौ । शृगाले ॥ परमेष्ठिनि ॥

मृगरसा । स्त्री० सहदेव्याम् ॥

मृगराट् । पुं० सिंहे । मृगेषुराजते । राज० । क्विप् ॥

मृगराजः पुं० सिंहे ॥ मृगाणांराजा । राजाहःसखिभ्यष्टच् ॥

मृगराटिका । स्त्री० जीवन्त्याम् ॥

मृगरिपुः । पुं० सिंहे ॥ मृगाणांरिपुः ॥

मृगरोमजम । न० राङ्कवे । मृगरोमजवस्त्रे ॥

मृगलाञ्छनः । पुं० चन्द्रे । शशिनि ॥ मृगोलाञ्छनंयस्य ॥

मृगवल्लभः । पुं० कुन्दुरुतृणे ॥

मृगवाहनः । पुं० वायौ ॥ मृगोवाहनंयस्य ॥

मृगव्ययम् । न० मृगयायाम् ॥ मृगाव्ययन्त्यत्र । व्ययगतौ । अन्येष्वपीतिडः ॥

मृगशिराः । स्त्री० पंचमनक्षत्रे ॥ मृगःशिरोऽस्य ॥

मृगशिरः । न० मृगशीर्षे । पंचमे नक्षत्रे ॥ तत्रजातस्यफलम् । शरासनाभ्यासरतोविनीतः सदानुरक्तो गुणिनांगुणेषु । भक्तानुपक्त्वभरे

